कर्तरीनखकर्तर्यावर्धकर्तरी संज्ञितः ॥ १२५ ॥

सारणा कर्तरी घोषो रेफो निष्कोणबिन्दुकः ।[1]
खचितश्शुकतुण्डश्च परिवर्तनमूर्छने ॥ १२६ ॥

एकादश समुद्दिष्टा एषां लक्षणमुच्यते ।
अङ्गुलीभिश्चतसृभिः प्रत्येकं हननाद्भवेत् ॥ १२७ ॥

कर्तरी नखकैश्चैव चतुर्भिर्नखकर्तरी ।
सव्योन्तर्बहिराघातान्मध्यमानामिकाद्भवेत् ॥ १२८ ॥

स्यादर्धकर्तरी सव्यसव्येतर कराहतेः ।
सारणा कर्तरी घोषो रेफस्समुपघुष्यते ॥ १२९ ॥

अङ्गुल्या मध्यया बाह्ये घातोऽनामिकयान्तरे ।
यथा तथा भवेद्रेफ इति प्रोक्तो मनीषिभिः ॥ १३० ॥

नादं संरुध्य तर्जन्या स्यादनामिकया बहिः ।
हननाद्बिन्दु संभूतिः त्यक्त्वा तदनुसारणात् ॥ १३१ ॥

तर्जन्यङ्गुलिघातेन निष्कोणः कथ्यते बुधैः ।
करेण दक्षिणेनैव कर्तर्यान्येन सारणा ॥ १३२ ॥

उत्क्षिप्योत्क्षिप्य बहुशो यदास्यातां मिथः क्रमात् ।
तदा खचितकोऽग्रेण तर्जन्यङ्गुष्ठयोर्हतेः ॥ १३३ ॥

शुकतुण्डः प्रयोगेषु दोषज्ञैस्सविधीयते ।
तर्जनी प्रमुखेनैव कनिष्ठा प्रथमेन च ॥ १३४ ॥

---

[1] मातृकायां पतितः ।

हननेन द्विरूपेण परिवर्तन संविधा ।
भ्रान्त्वा त्यक्त्वा तयोः पार्श्वे संस्पर्शेन यथा क्रमम्  ॥ १३५ ॥

अङ्गुली सारितोभ्येति स्वरस्थाने कनीयसी ।
तदायं मूर्छनाख्यस्य हस्तस्यावसरो भवेत्  ॥ १३६ ॥

कर्तव्या द्वादश[1]करा मूर्छनान्तस्समीरिताः ।

**इति हरिपालीयोक्त वीणाहस्तव्यापार लक्षणानि ॥**

**अथ तदुक्त तन्त्रीवाद्यद्वैविध्यं निरूप्यते ॥**

सकलं निष्कलं चेति तन्त्रीवाद्यं द्विधा भवेत्  ॥ १३७ ॥

सकोणं सकलं प्रोक्तं निष्कोणं निष्कलं भवेत् ।
आलापिन्यादि वीणाङ्गं विशेषोऽयं प्रदर्शिरे  ॥ १३८ ॥

सकलं छिन्नया (? जीवया)युक्तं निष्कलं शून्यमेतया ।

**इति द्विविधवाद्यलक्षणम् ॥**

**अथ रत्नाकरोक्तं वाद्यस्यदशविधत्वं चोच्यते ॥**

एतद्धस्त समायोगाद्वादनं वाद्यमुच्यते  ॥ १३९ ॥

---

[1] उद्देश कथनावसरे एकादशैव वर्णिताः ।

वाद्यं दशविधं प्रोक्तं मुनिभिर्भरतादिभिः ।
तल्लक्षणन्तु सोद्देशं वक्ष्ये मन्दविबुद्धये ॥ १४० ॥

छन्दो धारा कैकुटी च कङ्कालं वस्तु च द्रुतम् ।
गजलीलं दण्डकं चोपरिवाद्यमतःपरम् ॥ १४१ ॥

वाद्यं पक्षिरुतं चेति दशधा परिकीर्तितम् ।

**एषां दशविध वाद्यानां लक्षणानि वक्ष्यन्ते ॥**

श्वसितस्फुरिता यत्र क्रियेते बहुधाकरौ ॥ १४२ ॥

तारश्च स्पृश्यते स स्याच्छन्दो यति मनोहरः ।

**इति च्छन्दः ॥ १ ॥**

स्खलितो मूर्छना चाथ कर्तरी रेफ संयुता ॥ १४३ ॥

उल्लेख रेफौ यत्रेमां धारां ब्रूते हरप्रियः ।

**इति धारा ॥ २ ॥**

शुकवक्त्रः स्फुरितको घोषः स्यादर्धकर्तरी ॥ १४४ ॥

क्रमादेते करा यत्र तामाहुः कैकुटीं बुधाः ।

**इति कैकुटी ॥ ३ ॥**

स्फुरितैर्मूर्छना संज्ञैः कर्तरी त्रितयेन च ॥ १४५ ॥

युतं करैः क्रमादेभिः कङ्कालं कथितं बुधैः ।

इति कङ्कालम् ॥ ४ ॥

स्पष्टतारमुपेतं यत्कर्तर्याः श्वसितेन च ॥ १४६ ॥

कुहरेणाथ तद्वाद्यं वस्तु वस्तुविदोविदुः ।

इति वस्तु ॥ ५ ॥

कर्तरी श्वसितो यत्र क्रमेण कुहरः करः ॥ १४७ ॥

रेफ भ्रमर घोषाश्च तद्रुतं ब्रवते बुधाः ।

इति द्रुतम् ॥ ६ ॥

बहुधा मूर्छना हस्ताः स्फुरितः कर्तरी ततः ॥ १४८ ॥

श्वसितो यत्र तत्प्राहुर्गजलीलं कलाविदः ।

इति गजलीलम् ॥ ७ ॥

स्खलितो मूर्छनाख्यश्च कर्तरी रेफसंयुतः ॥ १४९ ॥

श्वसितो यत्र वाद्यज्ञा दण्डकं तद्बभाषिरे ।

इति दण्डकम् ॥ ८ ॥

ऊर्ध्वाधोगौ क्रमाद्धस्तौ रेफकर्तरिकाभिधौ ॥ १५० ॥

निष्कोटतलहस्तौ च द्वावप्युपरिवादके ।

इत्युपशुल्काख्यकम् ॥ ९ ॥

समस्तहस्त वाद्यन्तु वाद्यं पक्षिरुतं मतम् ॥ १५१ ॥

इति पक्षिरुतम् ॥ १० ॥

इति रत्नाकरोक्तदशविधवाद्यलक्षणम् ॥ तत्रैव—

सकलं निष्कलं चेति द्विविधं वाद्यमुच्यते ।

तत्र सकलवाद्यं यथा—

तन्त्री संलग्न जीवातः स्थूलो यत्र ध्वनिर्भवेत् ॥ १५२ ॥

तदुक्तं सकलं वाद्यमपरेत्वन्यथा जगुः ।
आदोरिकां पत्रिकां चेत्तर्जनीस्पर्श वर्जितम् ॥ १५३ ॥

सार्यते कम्रिका वाद्यं तदाहुस्सकलाभिधम् ।
अपनीयकलां कम्रामधो नैषाददेशतः ॥ १५४ ॥

न नयेत्तर्जनीस्पर्शं तन्त्र्यां चेति निष्कलं तदा ।
सूक्ष्मश्चात्र भवेन्नादः सारणामत्र केचन ॥ १५५ ॥

आमध्यम स्वरस्थानं सारणायां प्रपेदिरे ।
अवोचदिति निःशङ्कः शिष्याभ्यासाय वादनम् ॥ १५६ ॥

श्रुत्यादि क्रमतो गीतनिष्पत्यै त्विदमादिशत् ।

एवं रत्नाकरोक्तवीणावाद्यदशविधत्वं तद्द्वैविध्यं चोक्त्वा ततः-परमेकतन्त्र्यादि वीणास्वरूपं निरूप्यते ॥

वक्ष्यामि स्वररन्ध्राणां यद्वंशेऽष्टदशाङ्गुले ॥ १५७ ॥

प्रथमेसप्तकेस्थानं वीणायामपि तन्मतम् ।
स्वराणां किन्तु वैणानामधराधर तारता ॥ १५८ ॥

मध्यमेसप्तकेस्थानं ततः स्याद्द्विगुणान्तरम् ।
तृतीयेसप्तकेस्थानं ततोऽपि द्विगुणान्तरम् ॥ १५९ ॥

अङ्क्यन्ते च स्वरस्थानान्यमूनि सुखबुद्धये ।
यथा स्वं स्वरदेशानां विभागाच्छ्रुतिदेशधीः ॥ १६० ॥

स्याद्ग्राम मूर्छनादीनामुद्बोधस्सुकरस्ततः ।
एषोऽपि जनकप्रोक्तः घोषकश्चैकतन्त्रिका ॥ १६१ ॥

## इत्येकतन्त्रीवीणालक्षणम् ॥

## (अथ नकुलीवीणादि लक्षणम् ॥)

तन्त्रीद्वयेन नकुलीस्यादन्वर्था त्रितन्त्रिका ।
तन्त्रीभिस्सप्तभिश्चित्रा विपञ्ची नवभिर्मता ॥ १६२ ॥

कोणाङ्गुलि घातनीया चित्रा तद्वद्विपञ्चिका ।
क्रमादन्येङ्गुलि कोणव्यवस्थामूचिरे तयोः ॥ १६३ ॥

चित्रायामङ्गुलि मात्रं विपञ्च्यामुभयं परे ।
तन्त्रीणामेकविंशत्या कीर्तिता मत्तकोकिला ॥ १६४ ॥

मुख्येयं सर्ववीणानां त्रिस्थानैस्सप्तभिः स्वरैः ।
संपन्नत्वात्तदन्यास्तु तस्याः प्रत्यङ्गमीरिताः ॥ १६५ ॥

करणैश्चित्रयन्त्यस्ताः तस्याः स्युरुपराङ्गिकाः ।

**एतासां वीणानां रत्नाकरोक्तः करणोद्देशः कथ्यते ॥**

रूपं कृतप्रतिकृतं प्रतिभेदस्ततः परम् ॥ १६६ ॥
स्याद्रूपशेषमोघश्च प्रतिशुष्केति षड्विधम् ।

**इति करणोद्देशः ॥**

**अथ धातुलक्षणमुच्यते ॥**

(पुष्णन्ति वीणवाद्यं ये)[1] रक्तिं दधति चातुलाम् ॥ १६७ ॥
कुर्यन्त्यदुष्टपुष्टिश्च तान्धातूनधुनाब्रुवे ।
ये प्रहार विशेषोत्थाः स्वरास्ते धातवो मताः ॥ १६८ ॥

**इति धातुलक्षणम् ॥**

**अथ धातूनामुद्देशो कथ्यते ॥**

(विस्तार करणाविद्ध व्यञ्[1])जनाश्चेति धातवः ।
चतुर्धा तेषु विस्तारः चतुर्धा बोधितो बुधैः ॥ १६९ ॥

**इति धातूद्देशः ॥**

**अथ वृत्तिलक्षणं कथ्यते ॥**

वृत्तिर्गुणप्रधानत्वरूपा व्यवहृतिर्मता ।

**इति वृत्तिलक्षणम् ॥**

---

[1] मातृकायां पतितः ।

## (अथ वृत्त्युद्देशः ॥)

[1]चित्रा वृत्तिर्दक्षिणा च तिस्रः स्युरिति वृत्तयः ॥ १७० ॥

## इति वृत्त्युद्देशः ॥

## आसां वृत्तीनां यति मार्ग ग्रहा उच्यन्ते ॥

द्रुतादिकान् लयानासां नियच्छन्ति क्रमात्परे ।
समां स्रोतोगतां तद्वत् गोपुच्छाञ्च यति क्रमात् ॥ १७१ ॥

मागधीं संभाविताख्यां गीतिञ्च पृथुलां क्रमात् ।
(ओघं चानुगतं तत्त्वं)[2] वाद्यानेतान्यनुक्रमात् ॥ १७२ ॥

मार्गं चित्रं वार्तिकाख्यं दक्षिणाञ्च यथाक्रमम् ।
अनागत समातीतान् ग्रहानिह च मन्यते ॥ १७३ ॥

## अथ गीतानुगवाद्योद्देशः ॥

(तत्त्वं)[2] भवेदनुगतमोघश्चेति निरूपितम् ।
गीतानुगं त्रिप्रकारं वाद्यं तल्लक्ष्मकथ्यते ॥ १७४ ॥

## अथ शुष्कवाद्योद्देशः ॥

---

1 "चित्रावाद्य प्रधानत्वाद्गीतस्य गुणतोच्यते ॥
उभयोः समभावेन वृत्तिर्वृत्तिरुदाहृता ।
गीतप्रधानता वाद्यगुणता दक्षिणा मता ॥ "
इति रत्नाकरोक्तः वृत्तिलक्षणात्मकः सार्धश्लोकः मातृकायां न गृहीतः ।
किन्तु 'द्रुतादिकान्' इत्यादिना तदुक्त पक्षान्तरं मात्रं स्वीकृतम् ॥

2 मातृकायां पतितः ।

आश्रावणारंभः विधिः वक्रपाणिस्ततःपरम् ।
सङ्घोटना चतुर्थी च पञ्चमी परिघट्टना ॥ १७५ ॥

मार्गासारितकं लीलाकृतमासारित त्रयम् ।
दशेति शुष्कवाद्यानि कथितानि मुनीश्वरैः ॥ १७६ ॥

**वाक्यम्—एतत्करण धात्वादि शुष्कवाद्यभेदान्तानां लक्षणप्रपञ्चो विस्तरभीरुणा मुम्मडि चिक्कभूपालेन सङ्गीतरत्नाकरे द्रष्टव्य इति नात्र लिखितः ॥**

**इति नकुल्यादि पञ्चवीणालक्षणम् ॥**

**अथ रत्नकारोक्ता आलापिनी लक्ष्यते ॥**

आलापिनी गतं लक्ष्म वक्ष्ये लक्ष्मविदां मतम् ।
आलापनीति योक्तात्र लोके दण्डेति सोच्यते ॥ १७७ ॥

नवमुष्टियुतो दैर्घ्ये वैणवस्सुषिरान्तरः ।
अङ्गुली द्वन्द्वपरिधिः प्राग्वद्ग्रन्थ्यादि वर्जितः ॥ १७८ ॥

श्लक्ष्णस्समस्सुवृत्तश्च दण्डस्स्यात् ककुभं दधत् ।
अङ्गुलद्वयविस्तारमङ्गुलार्धायतं तथा ॥ १७९ ॥

तदर्धं पिण्डसंयुक्तमुन्मुखं पत्रिकोज्झितम् ।
एकदण्डमधोभागे शङ्कुना च विराजितम् ॥ १८० ॥

चतुरङ्गुलदैर्घ्येण बहिर्मध्योन्नतेन च ।
तस्य तुम्बं परीणाहे द्वादशाङ्गुल सम्मितम् ॥ १८१ ॥

चतुरङ्गुल वक्त्रञ्च दन्तनाभि समन्वितम् ।
अग्रादधस्तात्पादोने मुष्टियुग्मे निबध्यते ॥ १८२ ॥

अत्रमेषान्त्र तन्त्री स्यात् सूक्ष्मा श्लक्ष्णा समा दृढा ।
कर्परं नारिकेलोत्थं दोरिकं सारिका तथा ॥ १८३ ॥

त्रीण्येतानि नविद्यन्ते[1] (निबद्ध्यन्ते) सोत्रसालापिनीमता ।
दशमुष्टिमितं दण्डमत्राहुः खादिरंपरे ॥ १८४ ॥

पट्टसूत्रमयीं तन्त्रीं यद्वा कार्पास सूत्रजाम् ।
रक्तचन्दनजान् सर्वान् वीणादण्डान् परे जगुः ॥ १८५ ॥

दशमुष्ट्यधिकं मानं क्वचिल्लक्ष्येषु दृश्यते ।
तुम्बं वक्षसि निक्षिप्य वामाङ्गुष्ठेन तस्य च [2] ॥ १८६ ॥

मूलमुत्पीड्य धृत्वातामथ मध्यमयासुधीः ।
दक्षिणस्यानामया वा वादयेद्बिन्दु धातुवत् ॥ १८७ ॥

बिन्दुहस्तेन वा मन्द्रे मध्ये तारे च वादयेत् ।
त्रयस्तु दक्षिणात्पाणेश्चत्वारो वामतःस्वराः [2] ॥ १८८ ॥

इत्युक्तं कैश्चिदाचार्यैरपरे त्वन्यथा जगुः ।
मध्यमो मुक्तया तन्त्र्या तर्जन्यादङ्गुलि त्रयात् ॥ १८९ ॥

वामस्यानामिका वर्ज्याः त्रयः स्युः पञ्चमादयः ।
मुक्ततन्त्र्याथ षड्जः स्यादृषभस्तर्जनी भवः [2] ॥ १९० ॥

---

[1] **सिंहभूपाल व्याख्यानानुसारेण ‘ निबद्ध्यन्ते ’ इति पाठस्साधुः ।**

[2] **मातृकायां पतितः ।**

गान्धारो मध्यमाङ्गुल्या दक्षिणेनाथवादनम् ।
आरोहेणावरोहेण सप्तकद्वितये भवेत् ॥ १९१ ॥

एभिस्स्वरैर्विरचितं विचित्रं रागमालपेत् ।
गायेद्गीतं निबद्धञ्च प्रवीणो वीणयानया ॥ १९२ ॥

इदमालापिनी लक्ष्म श्रीनिःशङ्केन कीर्तितम् ।

**एतदेव हरिपालीये सम्यङ्निरूप्यते ॥**

स....नावली रूपा सुलक्षणमुदीर्यते[1] ॥ १९३ ॥

दण्डो मलयजेन स्याद्वेणुना खदिरेण वा ।
एकाङ्गुलमितं तस्य सुषिरं कार्यमन्तरा ॥ १९४ ॥

षडङ्गुल परीणाहो दैर्घ्यं स्यान्नवमुष्टिकम् ।
अतऊर्ध्वं भवेद्दैर्घ्यं आचतुर्दशमुष्टिकम् ॥ १९५ ॥

ककुभः तत्प्रमाणस्याल्लोहपत्रविवर्जितम् ।
दण्डानुरूपतः श्लक्ष्णः विधेयं नाभितुम्बकम् ॥ १९६ ॥

कौशेयैः पट्टसूत्रैर्वा तन्त्रीयुग्मं प्रकल्पयेत् ।
ऊर्ध्वं तुम्बस्य भागे द्विर्बध्नीयात् तारतन्त्रिका ॥ १९७ ॥

एकवारं ततो मन्द्रतन्त्रीमासञ्जयेत् दृढम् ।
जीवाद्वयं द्वयोस्तन्त्री ककुभे स्थापयेत्ततः ॥ १९८ ॥

कांस्येन वा सुवर्णेन भूषयेत् पार्श्वयुग्मकम् ।
वादनं ब्रह्मवीणावत् सव्येतरकरोद्भवम् ॥ १९९ ॥

---

[1] हरिपालीय सङ्गीतसुधाकरमूलग्रन्थे अयं श्लोकार्धः अधिकं वर्तते ।

वामो विरहितःकार्यः करो वेणु शलाकया ।
अनामिका तर्जनिका कनिष्ठाभिर्विकल्पयेत् ॥ २०० ॥

भेदोऽनेकविधस्तत्र सारणादेर्विचक्षणैः ।

## मतान्तरे

दशमुष्टियुतं दण्डं रक्तचन्दनजं तथा ॥ २०१ ॥

अन्तस्सुषिरसंयुक्तं दण्डे रन्ध्रादि वर्जितम् ।
अग्रे मेरुसमायुक्तं आदौस्यात्पीठवर्जितम् ॥ २०२ ॥

पट्टसूत्रेण संबद्धं वलयं छिन्नसंयुतम् ।
अलाबु संयुतं चाग्रे तद्ग्रन्थेण (?) च बन्धितम् ॥ २०३ ॥

एवं लक्षणसंयुक्तं दण्डस्याद्रागवर्धनम् ।
सूत्रद्वयसुसंयुक्तं तत्स्यादालापिनी मता ॥ २०४ ॥

मेरोरधस्तादूर्ध्वंच बध्नीयात् सूत्रवेष्टनम् ।
दण्डस्यदेवताशंभुः सूत्रयोर्वासुकिस्तथा ॥ २०५ ॥

आधारे देवता ब्रह्मा मेरोस्सर्वोत्तमो हरिः ।
अग्रे जीवः स्वरमयः सुषिरं चन्द्रदैवतम् ॥ २०६ ॥

एवं लक्षणसंयुक्तः दण्डश्चालापिनी मता ।

## इत्यालापिनी लक्षणम् ॥

## अथ रत्नाकरोक्तकिन्नरीलक्षणं लक्ष्यते ॥

किन्नरी द्विविधा लघ्वी बृहती चेति कीर्तिता ॥ २०७ ॥

तत्र लघ्वीगतं लक्ष्म सांप्रतं प्रतिपाद्यते ।
स्याद्वितस्तित्रये दैर्घ्ये मानं पञ्चाङ्गुलाधिकम् ॥ २०८ ॥

पञ्चाङ्गुलः परीणाहो वेणुदण्डस्य यत्र च ।
गर्भेऽस्य व्यापकं रन्ध्रं ककुभस्सारदारुजः[1] ॥ २०९ ॥

सार्धद्व्यङ्गुल विस्तारो दैर्घ्ये पञ्चा ुलश्च सः ।
तस्मादर्धाङ्गुलन्यूना दैर्घ्यविस्तारयोर्भवेत् ॥ २१० ॥

मध्ये कूर्मोन्नता लौही पत्रिका ककुभे स्थिता ।
गृध्रवक्षोऽस्थिनलिका कनिष्ठाङ्गुलि सम्मिता ॥ २११ ॥

लौहीकांस्यमयी यद्वा कीर्तिता सारिकाख्यया ।
श्लिष्टा वस्त्रमषीमिश्रमर्दनेन चतुर्दश ॥ २१२ ॥

चतुर्दश स्वरस्थाने दण्डपृष्ठे निवेशयेत् ।
सप्तकस्य द्वितीयस्य यो निषादो भवेदधः ॥ २१३ ॥

तस्य स्थाने भवेदाद्या सारिकान्योर्ध्वमङ्गुलात् ।
स्थापयेदन्तरे किञ्चित्किञ्चित्पूर्वाधिकेष्परा ॥ २१४ ॥

द्व्यङ्गुलावध्यष्टमीं तु पूर्वस्यास्त्र्यङ्गुलान्तरे ।
स्थापयित्वापराः षट् च पूर्वपूर्वाधिकेऽन्तरे ॥ २१५ ॥

चतुरङ्गुलपर्यन्तं सारिकांसंनिवेशयेत् ।
तुम्बं दण्डस्थककुभस्याधस्सन्धौ निवेशयेत् ॥ २१६ ॥

---

[1] "शाकदारुजः" इति रत्नाकर मूलग्रन्थपाठः । सिंहभूपालेनापि स एव पाठस्स्वीकृतः ।

तृतीय तुर्यसार्योस्तु मध्येऽधस्ताद्द्वितीयकम् ।
पूर्वसादपरं तुम्बं विस्तारेप्यधिकं मनाक् ॥ २१७ ॥

दण्डाग्रात् द्व्यङ्गुलाधस्ताद्रन्ध्रं कृत्वात्र निक्षिपेत् ।
चलशङ्कुं गलेरन्ध्रं दधमानं ततोऽङ्गुलात् ॥ २१८ ॥

अधस्तादङ्गुलोत्सेधं मेढकं बाणपुङ्खवत् ।
कृत्वा ततोऽग्रतः किञ्चित् स्थिरशङ्कुं निवेशयेत् ॥ २१९ ॥

ततो लोहमयीं श्लक्ष्णां वर्तुलांच समां दृढाम् ।
गजकेशोपमां तन्त्रीं निबध्य ककुभे दृढम् ॥ २२० ॥

सारिका मस्तकन्यस्तामानीतां मेढकोपरि ।
लग्नं द्वितीयप्रान्तेन वेष्टयेच्चलकीलके ॥ २२१ ॥

शङ्कुं संभ्रामयेत् तावत् यावत्तन्त्री दृढा भवेत् ।
भ्रामणं वैपरीत्येन तन्त्री शैथिल्यकारणम् ॥ २२२ ॥

तन्त्री दैर्घ्येऽथ दार्ढ्याय चलशङ्कुगलस्थिते ।
छिद्रे न्यस्याथ सङ्कीलं स्थिरशङ्कौ निवेशयेत् ॥ २२३ ॥

लघ्वी सा किन्नरी प्रोक्ता शार्ङ्गदेवेन सूरिणा ।
अस्यां स्थायिनमारभ्य गणयेत्सप्तकद्वयम् ॥ २२४ ॥

सारीककुभयोर्मध्ये तर्जन्याद्यङ्गुलि त्रयात् ।
वादयेत्किन्नरीवीणा तन्त्रीं दक्षिणपाणिना ॥ २२५ ॥

वामस्य तिसृभिस्ताभिरङ्गुलीभिस्तु तन्त्रिकाम् ।
ततस्सारी प्रदेशस्थां स्वरव्यक्त्यै निपीडयेत् ॥ २२६ ॥

वितस्त्यभ्यधिका दैर्घ्ये परीणाहेऽङ्गुलाधिका ।
लघ्व्याः स्याद्बृहती स्नायुमयी तन्त्री त्रितुम्बिका ॥ २२७ ॥

आलापिनीवदस्यां च स्थाप्यं तुम्बं तृतीयकम् ।
अन्यल्लघ्वीगतं किन्नरी बृहती श्रयेत् ॥ २२८ ॥

इति रत्नाकरोक्तं द्विविधकिन्नरी लक्षणम् ॥

केचित् किन्नर्याः त्रैविध्यमप्याहुः— तत्सङ्गीतरत्नाकरे द्रष्टव्यम् ॥

हरिपालीयोक्तं किन्नरीलक्षणं लक्ष्यते ॥

किन्नरी भाषया देश्या वीणा सारङ्ग पूर्विका ।
अध्यर्धेन वितस्तीनां त्रयेणायतवान् पुनः ॥ २२९ ॥*

दण्डः कार्यो दृढः श्लक्ष्णो वेणुना खदिरेण वा ।
पाञ्चाङ्गुलस्स्यादानाहः ककुभस्तत्प्रमाणवान् ॥ २३० ॥

कूर्मपृष्ठाकृतिः स्थाप्यः पत्रिका लोहनिर्मिता ।
अस्यार्धभागे बध्नीयात् अधस्ताल्लोहतुम्बकम् ॥ २३१ ॥

अग्रमष्टाङ्गुलं कृत्वा स्थापयेत्पृथु तुम्बकम् ।
उपरि स्थाप्य तुम्बस्य संविधे रन्ध्रयुग्मकम् ॥ २३२ ॥

कुर्वीत कीलकौ तत्र स्थाप्यौ सकलशावुभौ ।
ऊर्ध्वे स्यान्निश्चलं कुर्यात्कीलकं चरमं चलम् ॥ २३३ ॥

चरमे लोहरचिता वक्रा कलया शलाकिका ।
निश्चले कीलकलशे विदध्याद्रन्ध्र पञ्चकम् ॥ २३४ ॥

---

* मातृकायां श्लोकसंख्यायां दशाधिकं विपर्यासेन अवकृष्टम् ।

तन्त्रीप्रवेशयोग्यञ्च विदध्यात्सुषिरं चले ।
कीलादुपरि दण्डस्य दृढतन्त्रीं निधाय च ॥ २३५ ॥

तन्त्रीं तेनैव रन्ध्रेण प्रवेश्य चलकीलके ।
ग्रन्थयेच्चरमं भागममुष्मात्ककुभस्य तु ॥ २३६ ॥

छिद्रे प्रवेश्य बध्नीयात् दृढं वीणाविचक्षणः ।
भ्रमणाच्चलकीलस्य पश्चात्तन्त्री दृढा भवेत् ॥ २३७ ॥

स्थैर्याय चलकीलस्य पत्रं लोहमयं पुनः ।
निश्चले कीलके गाढमङ्कुशं विनिवेशयेत् ॥ २३८ ॥

बद्ध्वा लोहमयीं तन्त्रीं गजकेशोपमं भवेत्[1] ।
दीप्तां जीवां विधानज्ञः ककुभे तत्र निक्षिपेत् ॥ २३९ ॥

वस्त्रकज्जलमिश्रेण मधूच्छिष्टेन निर्मिताः ।
कनिष्ठाङ्गुलिविस्तारं भित्तयः स्युश्चतुर्दश ॥ २४० ॥

पूर्वाप्येकाङ्गुलोत्सेधा चरमा द्व्यङ्गुलोच्छ्रया ।
मध्यस्था भित्तयः कार्याः क्रमादेवंसमुच्छ्रयाः ॥ २४१ ॥

गृध्रपादास्थिसदृशान् अलकान् लोहकल्पितान् ।
सर्वासामेव भित्तीनां निदध्यादूर्ध्वभागके ॥ २४२ ॥

स्वरसप्तकयुग्मस्य भित्तयः स्युः प्रमाणतः ।
एवं किन्नरिवीणायाः लक्षणं समुदीरितम् ॥ २४३ ॥

---

[1] हरिपालीयमूलमातृकायां न दृश्यते ।

उच्यते नियतं सम्यगेतस्या वादनक्रमः ।
कनिष्ठावर्जमुल्लेखपरिलेखावनन्तरम् ॥ २४४ ॥

तिसृभिर्दक्षिणाभिः वाद्यमङ्गुलिभिः क्रमात् ।
त्यक्त्वाङ्गुलिं ततो मध्यां रागमन्याभिरुज्वलम् ॥ २४५ ॥

वादयेदन्तराभित्तेः वामहस्तेन वादकः ।
एवं किन्नरिवीणायाः वादनं समुदीरितम् ॥ २४६ ॥

**इति किन्नरीलक्षणं निरूपितम् ॥**

**वाक्यम्ः—एतत्ततवाद्यभेदप्रपंचः सङ्गीतरत्नाकरे द्रष्टव्यः । रत्नाकरे वीणाभ्यासकरणे फलमुच्यते ॥**

यथा यथा स्वरे व्यक्ती रक्तिप्रचुरता भवेत् ।
तथा तथा विधातव्यं तत्तं लोकानुसारतः ॥ २४७ ॥

सम्यक् स्वरोपयोगीनि तन्त्रीवाद्यानि कानिचित् ।
उक्तान्यन्यान्यपि प्राज्ञैस्तर्कयेदनयादिशा ॥ २४८ ॥

यो वीणावादनं वेत्ति तत्त्वतःश्रुतिजातिवत् ।
तालपातकलाभिज्ञः सोऽक्लेशान्मोक्षमृच्छति ॥ २४९ ॥

तस्माद्वीणा निषेव्येति याज्ञवल्क्यादयोऽब्रुवन् ।

**इति वीणाभ्यासकरणफलम् ॥**

**अथ वैणिकलक्षणमुच्यते ॥**

नादश्रुतिस्वरग्रामजातिरागादितत्त्ववित् ॥ २५० ॥

देहसौष्ठवसम्पन्नः स्थिरासनपरिग्रहः ।
जितश्रमकरद्वन्द्वः त्यक्तरोषो जितेन्द्रियः ॥ २५१ ॥

प्रगल्भधीस्सुशारीरो गीतवादनकोविदः ।
सावधानमनाश्चेति वैणिके वर्णिता गुणाः ॥ २५२ ॥

## हरिपालीये

जितश्रमः कलाभिज्ञः सुशारीरस्सुशिक्षितः ।
करप्रयोगकुशलो न्यूनाधिकनिरीक्षणे ॥ २५३ ॥

**इति ततवाद्यस्वरूपसंग्रहः ॥**

**अथ क्रमप्राप्तं सुषिरवाद्यस्वरूपं निरूपयितुं तत्रादौ रत्नाकरोक्त-वंशवाद्यस्वरूपस्यातिविस्तरत्वात् तत्त्यक्त्वा हरिपालीय भारतीयमतोक्तवंशवाद्यलक्षणानि निगद्यन्ते ॥**

उच्यते तत्र विशदं वंशवाद्यस्य लक्षणम् ।
त्वक्सारदन्तखदिररक्तचन्दनचन्दनैः ॥ २५४ ॥

वंशः कनिष्ठिकामात्रसुषिरोदरको भवेत् ।
ताररन्ध्रात्परस्तात्तु वंशस्यास्य दशाङ्गुलः ॥ २५५ ॥

अग्रेऽङ्गुलद्वयं त्यक्त्वा मुद्रारन्ध्रं विधीयते ।
रन्ध्राणि षड्विधेयानि मुद्रातारान्तरे पुनः ॥ २५६ ॥

ताररन्ध्रप्रमाणानि सममध्यानि वादकैः ।
वामं फूत्काररन्ध्रस्य भागं काष्ठेन मुद्रयेत् ॥ २५७ ॥

सुवर्णताम्रकांस्याद्यैः बध्नीयात् पार्श्वयोर्युगम् ।
षडङ्गुलप्रमाणोऽस्य परीणाहस्समीरितः ॥ २५८ ॥

किञ्चिदप्यधिकं वेणोरग्रे द्व्यङ्गुलिमात्रकम् ।
परित्यज्य ततो मुद्रारन्ध्रं विरचयेद्बुधः ॥ २५९ ॥

समान्तराणि रन्ध्राणि षड्विधेयानि पूर्ववत् ।
इत्थं नवाङ्गुलो वंशः कथितो हरिभूभुजा ॥ २६० ॥

दशा ुलानि हित्वाथ फूत्कारसुषिरात्परम् ।
कृतस्सतारस्य पुरोवंशः पञ्चदशाङ्गुलः ॥ २६१ ॥

कुर्यादग्रे ततोऽस्यैव त्यक्त्वा सार्धाङ्गुलद्वयम् ।
मुद्रारन्ध्रं षडेवस्युः रन्ध्राण्यन्यानि पूर्ववत् ॥ २६२ ॥

एवं द्वादशाङ्गुलस्य वेणोर्लक्षणमीरितम् ।
रन्ध्राण्यष्टौ भवन्त्येवं विना फूत्काररन्ध्रकम् ॥ २६३ ॥

सर्वेषामेव वंशानांताररन्ध्रमुखान्वितम् ।
चतुर्दशाङ्गुलांतस्स्याद्वंशः पञ्चाङ्गुलाधिकः ॥ २६४ ॥

पूर्वोक्तेन प्रकारेण करणीयो मनीषिभिः ।
नाम वंशस्य कार्यं स्यादेवमङ्गुलिनामतः ॥ २६५ ॥

दोषादोषा निरूप्यन्ते परस्ताद्वंशवादने ।

**इति हरिपालीयोक्तवंशवाद्यलक्षणम् ॥**

**अथ भारतीयोक्तं वंशवाद्यं निरूप्यते ॥**

आतोद्यं सुषिरं नाम ज्ञेयं वंशगतं बुधैः ॥ २६६ ॥

वैण एव विधिस्तत्र स्वरग्रामसमाश्रयः ।
द्विकत्रिकचतुष्को वा स्वरस्य श्रुतिसङ्ख्यया ॥ २६७ ॥

अङ्गुलीवादनं कृत्वा तच्च वक्ष्याम्यतःपरम् ।
[अनीरणात्तु शेषाणां स्वराणां श्रुतिसंभवः ॥ २६८ ॥

अङ्गुलीवादनकृताः षड्जमध्यमपञ्चमाः][1] ।
व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुश्श्रुतिः ॥ २६९ ॥

कम्पमानाङ्गुलिश्चैव त्रिश्रुतिः परिकीर्तितः ।
द्विकोऽर्धमुक्ताङ्गुलिश्च इति श्रुत्याश्रिताःस्वराः ॥ २७० ॥

आर्षभः पञ्चमश्चैव कम्पमानाङ्गुलीकृतौ ।
एते तु मध्यमग्रामे भूयः षड्जाश्रितां शृणु ॥ २७१ ॥

व्यक्तमुक्ताङ्गुलिकृताः षड्जमध्यमपञ्चमाः ।
गान्धारोऽथ निषादश्च अर्धमुक्ताङ्गुली स्मृतौ ॥ २७२ ॥

धैवतश्चार्षभश्चैव कम्पमानाङ्गुलीकृतौ ।
स्वरसाधारणे चापि काकल्यन्तरसंज्ञयोः ॥ २७३ ॥

निषादगान्धारयोस्तु षड्जमध्यमयोरपि ।
विपर्ययः सन्निकर्षे श्रुतिलक्षणसिद्धितः ॥ २७४ ॥

वेणुदण्डप्रदेशेन सिद्धाः वंशाश्रितास्स्वराः ।
शरीरवंशवीणानामेकभावः प्रशस्यते ॥ २७५ ॥

---

[1] अस्य श्लोकस्य अर्थः नान्वेति ।

अविचलितमविच्छिन्नं वर्णालङ्कारसंयुतं विधिवत् ।
ललितं मधुरं स्निग्धं वेणोस्स्यात्षड्गुणंवाद्यम् ॥ २७६ ॥

एवमेतत्स्वरगतं विज्ञेयं गानयोक्तृभिः ।

इति भारतीयोक्तं वंशवाद्यलक्षणम् ॥

मतान्तरोक्तवंशवाद्यलक्षणमुच्यते :—

द्वादशाङ्गुलविस्तीर्णं ग्रन्थिरन्ध्रादिवर्जितम् ॥ २७७ ॥

रक्तचन्दनजं दारु सुषिरद्वयशोभितम् ।
रागप्रसृत्यै कुसुमञ्चाग्रे निक्षिप्य वादयेत् ॥ २७८ ॥

दण्डेऽधिदेवता वाणी कुसुमे कुसुमायुधः ।
सुषिरे देवता स्कन्दः मुखं वेणोस्त्रिदैवतम् ॥ २७९ ॥

इति वंशवाद्यलक्षणम् ॥

अथ रत्नाकरोक्तं वंशमाननिर्मिताङ्गुललक्षणमुच्यते:—

तिर्यग्यवोदरैस्सार्धैश्चतुर्भिर्निस्तुषैरिह ।
अङ्गुलं तेन पूर्वोक्तरीत्यारभ्यैकवीरतः ॥ २८० ॥

एतन्मतोक्तवांशिकगुणा उच्यन्ते:—

अङ्गुलीसारणाभ्यासः सुस्थानत्वं सुरागता ।
सुरागव्यक्तिमाधुर्यान्विता वेगाद्रुतागते ॥ २८१ ॥

गीतवादनदक्षत्वं गातॄणां स्थानदायिता[1] ।
तद्दोषाच्छादनं मार्गदेशीरागेषु कौशलम् ॥ २८२ ॥

स्वस्थानवदपस्थाने रागोद्भूतिप्रगल्भता ।
वांशिकस्य गुणानेतान्वक्ति श्रीकरणाग्रणीः ॥ २८३ ॥

## हरिपालीये

चातुर्यं करगुंफेषु[2] रागरागाङ्गनैपुणम् ।
स्वरे समे च विषमे रागनिर्माणकौशलम् ॥ २८४ ॥

ग्रहे मोक्षे च वैदग्ध्यं सर्ववाद्ये[3]ष्वभिज्ञता ।
इत्युत्तमस्य लक्ष्मैतद्वांशिकस्य समीरितम् ॥ २८५ ॥

## इति वंशवादकगुणाः ॥

## रत्नाकरोक्तवंशवादकदोषा भाष्यन्ते:—

मिथ्याप्रयोगबाहुल्यमेतद्गुणविपर्ययः ।
इष्टस्थानानवाप्तिश्च शिरसः कम्पनं तथा ॥ २८६ ॥

वांशिकस्येति दोषाः स्युर्वर्जनीयाः प्रयत्नतः ।

## हरिपालीये

स्थानाप्राप्तिः शिरःकम्पो भुजयोश्चलनं तथा ॥ २८७ ॥

---

1 कल्लिनाथव्याख्यानानुसारेण तानदायितेति पाठस्साधुः ।

2 गमकारंभे इति हरिपालीयमूलग्रन्थपाठः ।

3 स्वर्गतालेति हरिपालीयमूलग्रन्थपाठः ।

त्रयश्शरीरजा दोषाः वांशिकानामुदाहृताः ।
अज्ञता तालवेलायामव्यक्तिर्गमकोदये ॥ २८८ ॥

स्थानकावसरे जाड्यं गतेर्निर्वाहहीनता ।
मिथ्याप्रयोगप्राँचुर्यं जडता गीतवादने ॥ २८९ ॥

षडेते वांशिकगता दोषा दोषज्ञसंमताः ।

इति वांशिकदोषाः ॥

**अथ रत्नाकरोक्ता वंशवादकस्य फूत्कारगुणा उच्यन्तेः—**

स्निग्धता घनता रक्तिर्व्यक्तिः प्रचुरता ध्वनेः ॥ २९० ॥

लालित्यं कोमलत्वञ्च नादानुरणनं तथा ।
त्रिस्थानत्वं श्रावकत्वं माधुर्यम् सावधानता ॥ २९१ ॥

द्वादशेति गुणाः प्रोक्ताः फूत्कारे सूरिशार्ङ्गिणा ।
तत्र शब्दगुणेष्वेवैकादश प्रोक्तलक्षणाः ॥ २९२ ॥

फूत्कृतेस्सावधानत्वं न्यूनताधिक्यवर्जनम् ।

**हरिपालीये**

स्नैग्ध्यं तारस्वरस्थाने घनता सुस्वरस्थितिः ॥ २९३ ॥

अमी गुणज्ञैर्निर्दिष्टा गुणाः फूत्कारसंश्रयाः ।

इति फूत्कारगुणाः ॥

**अथ रत्नाकरोक्तफूत्कारदोषा लक्ष्यन्तेः—**

फूत्कारो यमलस्तोकः कृशस्स्खलित इत्यमी ॥ २९४ ॥

फूत्कारदोषा यमलं ब्रुवते प्रतिफूत्कृतिं ।
एषामन्वर्थनामत्वान्नोच्यते लक्षणं पृथक् ॥ २९५ ॥

कपिलस्तुम्बकी काकी सन्दष्टश्चाव्यवस्थितः ।
पञ्चैतान् फूत्कृतेर्दोषानपरानूचिरे परे ॥ २९६ ॥

एषां लक्षणानि लक्ष्यन्तेः—

यः कफोपहताद्वक्त्रात् विस्वरः स्फुटितो भवेत् ।
कपिलोऽसौ तुम्बध्वानप्रायः प्रोक्तस्तु तुम्बकी ॥ २९७[1] ॥

तारन्यूनतया काकस्वरः काकीति कथ्यते ।
अल्पः सन्दष्टवद्भाति योऽसौ सन्दष्ट उच्यते ॥ २९८ ॥

ऊनोधिको वा यो रूक्षः कथ्यते सोऽव्यवस्थितः ।
कण्ठस्य गुणदोषा ये पुरोक्तास्तेषु केचन ॥ २९९ ॥

फूत्कारेऽपि यथायोगं योजनीया मनीषिभिः ।

हरिपालीये

हीनस्वरत्वमव्यक्तिः कम्पः कर्णादपूर्णता ॥ ३००[2] ॥

प्रतिफूत्कार इत्येते दोषा पञ्च स्वराश्रिताः ।

इति फूत्कारदोषाः ॥

हरिपालीये वांशिकस्याङ्गुलिकर्माण्युच्यन्तेः—

अर्धमुक्तिरमुक्तिर्वा मुक्तिश्चलनमाशु च ॥ ३०१ ॥

---

[1] मातृकायां श्लोकसङ्ख्यायां एकाधिकं विपर्यासेन अवकृष्टम् ।

[2] मातृकायां श्लोकसङ्ख्यायां दशाधिकं विपर्यासेन अवकृष्टम् ।

चत्वार्यङ्गुलिकर्माणि निर्दिष्टानि प्रयोक्तृभिः ।

**इत्यङ्गुलिकर्माणि ॥**

**वंशवाद्ये देशीरागवादनप्रकारः कथ्यते—रत्नाकरे:—**

अधुना मुग्धबोधार्थमुदाहरणमात्रतः ॥ ३०२ ॥

वंशे देशीस्थरागाणां केषाञ्चिद्वादनं ब्रुवे ।
मध्यमं स्थायिनं कृत्वा तृतीये कम्पिते स्वरे ॥ ३०३ ॥

विलम्बिते द्वितीयेऽथ स्थायिनि न्यस्यते यथा ।
स्वस्थानं प्रथमं प्रोक्तं मध्यमादेस्तथा बुधैः ॥ ३०४ ॥

**इति रत्नाकरोक्तः देशीरागवादनप्रकारः ॥**

इत्यादिशार्ङ्गदेवोऽथ रागाणां वादनक्रमम् ।
अवोचद्बहुधा तत्स्वरूपं विस्तरभेदतः ॥ ३०५ ॥

अस्मिन् **महागिरीन्द्रेण चिक्कभूपेन** नोच्यते ।

**अथ वांशिकबृन्दलक्षणम्:—**

**(रत्नाकरे)**

एकः स्याद्वांशिको मुख्यश्चत्वारोऽप्यनुयायिनः ॥ ३०६ ॥

वांशिकानामिति प्रायस्तद्ज्ञैः बृन्दं निगद्यते ।

**इति वांशिकबृन्दलक्षणम् ॥**

**अथ मतान्तरोक्तश्रुतिवाद्यलक्षणं लक्ष्यन्ते:—**

अतःपरं प्रवक्ष्यामि श्रुतेस्सर्वार्थदं नृणाम् ॥ ३०७ ॥

लक्षणं तत्प्रकारञ्च गदितं मे निबोधत ।
अष्टाङ्गुलं तु विस्तीर्णं कनिष्ठाङ्गुलिमानकम् ॥ ३०८ ॥

एकविंशतिमानेन सुषिरं नातिविस्तृतम् ।
त्वग्भाण्डमुखमानन्तु एकाङ्गुलसुविस्तृतम् ॥ ३०९ ॥

मध्यमामध्यसंयुक्तं वामहस्तेन रेचितम् ।
कनिष्ठाङ्गुलिवर्जं स्याद्वामदक्षिणहस्तयोः ॥ ३१० ॥

धृत्वा चैकेन हस्तेन मुखेन श्रुतिमीरयेत् ।
मुखवाद्यमिदं प्रोक्तं भाण्डकूटमितीति च ॥ ३११ ॥

सर्वेषां भाण्डवाद्यानामुत्तमोऽयं विचक्षणैः ।

**इति श्रुतिवाद्यलक्षणम् ॥**

**अथ क्रमप्राप्तं रत्नाकरोक्तं पावाख्यं सुषिरवाद्यमारभ्यते:—**

पावो वेणुसमुत्पन्नः स्यान्नवाङ्गुलवंशवत् ॥ ३१२ ॥

कृतावेष्टो वेणुपत्रैर्लोकरीत्यैष वाद्यते ।

**इति पावलक्षणम् ॥**

**अथ पाविकालक्षणमुच्यते:—**

पाविका वैणवी कार्या द्वादशाङ्गुलदैर्घ्यभाक् ॥ ३१३ ॥

स्थौल्येऽङ्गुष्ठमिता गर्भे स्वदैर्घ्ये सुषिरं श्रिता ।
कनिष्ठाग्रमितस्थौल्यमस्या लोकानुसारतः ॥ ३१४ ॥

फूत्काररन्ध्रमेकं स्यात्पञ्च स्युः स्वरसिद्धये ।
वादनं विविधं रागवेगावेश[1] विधायकम् ॥ ३१५ ॥

इति पाविकालक्षणम् ॥

अथ सुरली[2]लक्षणमुच्यते:—

हस्तद्वयाधिकायामा मुखरन्ध्रसमन्विता ।
चतुस्वरच्छिद्रयुक्ता सुरली चारुनादिनी ॥ ३१६ ॥

इति सुरली ॥

अथ मधुकली[3]लक्षणं कथ्यते:—

श्रृङ्गजा दारवी वा स्यात्कहळाकृतिधारिणी ।
अष्टाविंशत्यङ्गुला च दैर्घ्ये मधुकली शुभा ॥ ३१७ ॥

मुखरन्ध्रन्तु तस्याः स्यात्तुवरीबीजसन्निभम् ।
मुखरन्ध्रादङ्गुलानि त्यक्त्वा चत्वारि वंशवत् ॥ ३१८ ॥

विधाय सप्तरन्ध्राणि कुर्वते विवरान्तरम् ।
तेषाञ्च मुखरन्ध्रस्य मध्येऽधोभागसंस्थितम् ॥ ३१९ ॥

मधुरध्वानसिद्ध्यै तन्मुखरन्ध्रे तु ताम्रजा ।
निधातव्या यवस्थूला नालिका चतुरङ्गुला ॥ ३२० ॥

तदूर्ध्वञ्चक्रिका स्थाप्या दन्तजा शुक्तिजाऽथवा ।
रन्ध्रमध्ये काशमयीं यद्वा देवनलोद्भवाम् ॥ ३२१ ॥

---

[1] नागयक्षावेशो इति रत्नाकरमूलग्रन्थपाठः ।

[2] रत्नाकरोक्तं मुरलीवाद्यमिह सुरलीति व्यवहृतम् ।

[3] रत्नाकरोक्तं मधुकरीवाद्यमिह मधुकलीति सर्वत्र व्यवहृतम् ।

शुक्तिकां किञ्चिदुन्निद्रमालतीकलिकाकृतिं ।
मृदुलां क्षीरपाकेन क्षिप्त्वा मधुकलिं ततः ॥ ३२२ ॥

वंशवद्वादयेद्रन्ध्रं पिदधीताप्यधस्तनम् ।
वामाङ्गुष्ठाग्रभागेनेत्युक्तं निःशङ्कसूरिणा ॥ ३२३ ॥

**अथ मतङ्गमते :—**

अथ वाद्यं प्रवक्ष्यामि मतङ्गमुनिसम्मतम् ।
तद्वाद्यलक्षणं वक्ष्ये पूर्वोक्तविधिना मतम् ॥ ३२४ ॥

निर्दोषबीजकाष्ठञ्च मद्वरी[1]ति च सा स्मृता ।
एकविंशत्यङ्गुलिभिः मता तत्र पृथक् पृथक् ॥ ३२५ ॥

मवरी मूलमङ्गुल्या मितं द्व्यङ्गुलमध्यमम् ।
भवत्यग्रं द्व्यङ्गुलेन सर्वाङ्गं चैकविंशतिः ॥ ३२६ ॥

मूलशब्दे स्थितोब्रह्मा चाग्रे पशुपतिस्तथा ।
मध्ये जनार्दनः पक्षे साक्षान्नाममहेश्वरः ॥ ३२७ ॥

आद्यन्तयोर्वसुः पत्रं ब्रह्मा नाभिस्सरस्वती ।
कमला पत्रिका कुम्भे जवालस्तुसुधाकरः ॥ ३२८ ॥

सप्तरन्ध्रैश्च संमिश्रं सप्तस्वरसमन्वितम् ।
तेऽमिश्राण्येकरन्ध्रेण रन्ध्राण्यप्येकविंशतिः ॥ ३२९ ॥

मद्वर्या मूलकं बद्धं दक्षिणाख्येतरेण च ।
सर्पशीर्षकरेणैव मतङ्गमुनिना मतम् ॥ ३३० ॥

---

[1] रत्नाकरोक्तमधुकरीवाद्यमिह मतङ्गेन मद्वरी, मवरीति च व्यवहृतम् ।

अग्रं चतुरहस्तेन मृगशीर्षकरेण च ।
करद्वयेन संपीड्य मद्र्यां लक्ष्म चोदिता ॥ ३३१ ॥

पीडिता दक्षहस्तेन ब्रह्महत्यादि पातकम् ।
पीडिता वामहस्तेन भ्रूणहत्यां लभेत्सदा ॥ ३३२ ॥

पीडिता चेत्कराभ्याञ्च भवेत्प्रीतस्सदासिवः ।
चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः ॥ ३३३ ॥

द्वौ द्वौ निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतः ।
इमे सप्त स्वराश्चैव मतङ्गमुनिना मताः ॥ ३३४ ॥

षड्जमध्यमगान्धाराः स्थायिसञ्चारिणो मताः ।

**इति मतङ्गमते मधुकरीलक्षणम् ॥**

**अथ रत्नाकरोक्तं काहली लक्षणं लक्ष्यते :—**

ताम्रजा राजती यद्वा काञ्चनी सुषिरान्तरा ॥ ३३५ ॥

धुत्तूरकुसुमाकारवदनेन विराजिता ।
हस्तत्रयमिता दैर्घ्ये काहलं वाद्यते जनैः ॥ ३३६ ॥

हाहूवर्णवती वीरबिरुदोच्चारकारिणी ।

**हरिपालीये**

काहलाख्यस्य वाद्यस्य लक्षणं प्रतिपाद्यते ॥ ३३७ ॥

स्वर्णरौप्यादिभिश्शुद्धैर्विधेयं काहलं बुधैः ।
धुत्तूरकुसुमाकारवदनं सुषिरान्तरम् ॥ ३३८ ॥

प्रमाणतस्त्रिहस्तश्च हूहू (हाहू) पाटाक्षरादिभिः ।
कथनं बिरुदादीनामनेन क्रियते स्फुटम् ॥ ३३९ ॥

तथा काहलशब्दश्च स्यात्तीत्यादिभिरक्षरैः ।
प्रदर्शितः प्रकारोऽयं चतुरुच्चरितैः पृथक् ॥ ३४० ॥

**यथा—**

तिकि । धोतिकि । तक । धिति ।

**इति काहललक्षणम् ॥**

**रत्नाकरोक्तं तुण्डुकिनीलक्षणं लक्ष्यन्ते :—**

हस्तद्वयकृतायामा सैव तुण्डुकिनी मता ।
तुरुतुर्यपि सा लोके तित्तिरी च निगद्यते ॥ ३४१ ॥

यमलं तुण्डिकिन्योश्च वाद्यं वाद्यविदो विदुः ।

**इति तुण्डुकिनीलक्षणम् ॥**

तुण्डुकिन्येव चुक्का स्याद्दैर्घ्ये हस्तचतुष्टया ॥ ३४२ ॥

**इति चुक्का ॥**

**अथ शृङ्गलक्षणम् :—**

करेणुवदनाकारवदनं दोषवर्जितम् ।
शृङ्गं यन्माहिषं श्लक्ष्णं स्निग्धं सुघटितं कृतम् ॥ ३४३ ॥

शृङ्गस्यानडुहस्याथ धुत्तूरकुसुमाकृति ।
खण्डमष्टाङ्गुलि न्यस्य मूलेऽस्य ध्वनिवृद्धये ॥ ३४४ ॥

अग्रं द्वित्राङ्गुलं तस्य छित्वा फूत्काररन्ध्रकम् ।
विधाय तुत्तकारेण वादयेद्विविधं ध्वनिम् ॥ ३४५ ॥

एतद्वै ध्वानगम्भीरं वाद्यं गोपालकेषु च ।

इति शृङ्गवाद्यम् ॥

**अथ शङ्खलक्षणम् :—**

निर्दोषस्योत्खातनाभेः शङ्खस्यैकादशाङ्गुलम् ॥ ३४६ ॥

शिखरं निर्मितं धातु सिक्ततताभ्यां मनोहरम् ।
मूलतश्चाग्रपर्यन्तं ह्रस्वमानाकृति क्रमात् ॥ ३४७ ॥

रन्ध्रमर्धाङ्गुलमितं शिखरस्य मुखे भवेत् ।
अन्तस्तु मापमात्रं स्यात् शङ्खमेवंविधं सुधीः ॥ ३४८ ॥

धृत्वा कर्कटहस्तेन भूरिश्वासभृतोदरम् ।
हुंसुं थो दिगि दिंतेतत् वर्णौङ्घौघेन वादयन् ॥ ३४९ ॥

**इति शङ्खवाद्यलक्षणम् ॥**

**अथ ग्रन्थान्तरोक्तं भूर्गलक्षणं लक्ष्यते :—**

गिरिजारत्नसम्भूतं ताम्रलोहेन निर्मितम् ।
धुत्तूरपुष्पसङ्काशं दशतालमहोन्नतम् ॥ ३५० ॥

अथ द्वादशतालञ्च मुखमङ्गुष्ठविस्तरम् ।
अष्टाङ्गुलं पुच्छभागं बद्धयते कीलकैस्त्रिभिः ॥ ३५१ ॥

शिवेन निर्मितं पूर्वम् मुखवाद्यं महोत्तमम् ।
भूर्गस्य नादो विख्यातो मङ्गलप्रद एव च ॥ ३५२ ॥

क्रतोर्मध्ये विवाहे च पुत्रजन्मदिने शुभे ।
राज्याभिषेकवेलायां नादो भूर्गस्य चोत्तमः ॥ ३५३ ॥

वामहस्ते ब्रह्महत्या दक्षिणे गोवधस्तथा ।
उभाभ्यां पीड्यते भूर्गः कोटियज्ञफलं भवेत् ॥ ३५४ ॥

## इति भूर्गलक्षणम् ॥

## इति सुषिरवाद्यस्वरूपं निरूपितम् ॥

## अथानद्धम्

**तत्र प्रथमं तावद्रत्नाकरोक्तं पटहवाद्यस्वरूपं निरूप्यते :—**

मार्गदेशी गतत्वेन पटहो द्विविधो भवेत् ।
मार्गस्य पटहस्यात्र लक्षणं तावदुच्यते ॥ ३५५ ॥

सार्धहस्तद्वयं तस्य दैर्घ्यम् स्यात् परिधिः पुनः ।
अष्टाङ्गुलो मध्यदेशः पृथलो दक्षिणं मुखम् ॥ ३५६ ॥

कर्तव्यं सम्मितं सार्धैरेकादशभिरङ्गुलैः ।
वामन्तु दशभिस्सार्द्धैस्सम्मितं दक्षिणो मुखे ॥ ३५७ ॥

आयसं वलयं कार्यम् वामे वल्लीसमुद्भवम् ।
षाण्मासिको मृतो वत्सो यस्तस्यादायपालिकाम् ॥ ३५८ ॥

तयाऽवगुण्ठ्यवलयं वल्लीजं वाम वक्त्रगम् ।
सप्तरन्ध्रान्वितं कृत्वा सुदृढैः सूक्ष्मदोरकैः ॥ ३५९ ॥

निक्षिप्येतेषु रन्ध्रेषु बन्धव्याः कलशाः श्लथम् ।
ते हेमादिमया सप्तदैर्ध्येण चतुरङ्गुलाः ॥ ३६० ॥

त्यक्त्वाङ्गुलानि चत्वारि वामे स्याल्लोहपत्रिकाम् ।
अङ्गुलत्रयविस्तारां पटहे वेष्टयेद्दृढम् ॥ ३६१ ॥

बाह्यकायस्य यच्चर्म पशोस्तेन घनेन च ।
कबलाख्येन बध्नीयात् पिहितं वदनद्वयम् ॥ ३६२ ॥

दक्षिणास्यस्य कबलं परितःकृतरन्ध्रकम् ।
रन्ध्रक्षिप्तैर्गुणैर्गाढं आकृष्येतरवक्त्रके ॥ ३६३ ॥

वलये तान् गुणान् सम्यग्बध्नीयाद्दार्ढ्यसिद्धये ।
वामस्य कबलान्तस्थसप्तरन्ध्रनिवेशितैः ॥ ३६४ ॥

गुणैरावेष्ट्य कलशानायसैर्वलयैः दृढैः ।
अन्तःक्षिप्ता समाकृष्टैर्वलयं गाढतां नयेत् ॥ ३६५ ॥

कलशेभ्यो बहिर्वामवलयान्ते च बद्ध्यते ।
वेष्टनाय कटेः कच्छेत्युक्तोऽयं स्कन्ददैवतः ॥ ३६६ ॥

श्री यज्ञपुरवर्येण पटहो मार्गसंभवः ।

### अथदेशीपटहलक्षणम् :—

देशीस्थोप्येवमेव स्याद्दैर्ध्येऽसौ सार्धहस्तकः ॥ ॥ ३६७ ॥

सप्ताङ्गुलं दक्षिणास्यमन्यत्साधषडङ्गुलम् ।
आन्तरं जाठरं चर्म पशोर्गदितमुद्दलि ॥ ३६८ ॥

तया तु स्वच्छया वक्त्रं वाममस्य निबद्ध्यते ।
विशेषोऽयं भवेदस्मिन् उभौ खदिरदारुजौ ॥ ३६०. ॥

त्रिधोक्तोऽयं द्वयोरन्यैरुत्तमो मध्यमोऽधमः ।
उत्तमः प्रोक्तमान(?)स्स्याद् द्वादशांशोनितः पुनः ॥ ३७० ॥

मध्यमः षष्ठभागेन विहीनस्त्वधमो भवेत् ।

(इति देशीपटहः ॥)

(अथाद्यवर्णाः —)

ङवर्जितः कवर्गश्च टतवर्गौ रहावपि ॥ ३७१ ॥

एते षोडष वर्णाः स्युरुभयोः पाटसंज्ञिताः ।
संयोगविप्रयोगाभ्यां क्रमव्युत्क्रमयोगतः ॥ ३७२ ॥

सस्वरत्वास्वरत्वाभ्यां पाटास्ते स्युरनेकधा ।
उद्धल्यामेवझङ्कारो डेकारः कबलेऽधिकः ॥ ३७३ ॥

देशीपटहमेवाहुरिममङ्गावजं जनाः ।
अष्टादशाङ्गुलः किञ्चिन्नताग्रो मध्यतः पृथुः ॥ ३७४ ॥

कोणः कार्यो मूलदेशे मदनां[1]बरवेष्टितः ।
पद्मासनोपविष्टेन गोष्ठ्यामूरुद्वयोपरि ॥ ३७५ ॥

संस्थाप्य मार्गपटहो वाद्ये वर्णोद्भवे पटुः ।
नाटके त्वर्धवक्त्रोऽयं वाद्यते घटवाद्यवत् ॥ ३७६ ॥

---

[1] मातृकायां पतितः ।

कोणेन पाणिनाऽस्यवादनं सूरिणामतम् ।

इति रत्नाकरोक्तं पटहलक्षणम् ॥

अथ हरिपालीयोक्तं पटहलक्षणं लक्ष्यते :—

खादिरः पटहः कार्यो वितस्तित्रयमात्रकः ॥ ३७७ ॥

षष्ट्यङ्गुलसमः कल्प्यः परीणाहोऽस्य यत्नतः ।
अस्य प्रमितमत्यन्तमध्यभागः पृथुर्भवेत् ॥ ३७८ ॥

अस्यैव वदनं सव्यं सप्ताङ्गुलमितं भवेत् ।
अस्य सव्येतरं वक्त्रं भवेत्सार्धं षडङ्गुलम् ॥ ३७९ ॥

एतदेव भवेल्लोहवलयेन सुवेष्टितम् ।
सव्यमास्यं विधातव्यं वध्रावलयितुं तथा ॥ ३८० ॥

लोहपत्रमुखेवामे त्यक्त्वाऽङ्गुलिचतुष्टयम् ।
कर्णे विवेष्टितं कुर्यात् निर्मिताः कनकादिभिः ॥ ३८१ ॥

कलशाः कल्पनीयाः स्युस्सप्त वाद्यविचक्षणैः ।
सर्वतः कीलकं कुर्याच्चतुरङ्गुलमानतः ॥ ३८२ ॥

आस्येसव्ये विधेयानि सप्तरन्ध्राणि चर्मणा ।
आयसैर्वलयैरेव गुणैः रन्ध्रप्रवेशितैः ॥ ३८३ ॥

कलशाद्वेष्टयेदेवं इत्थं पटहलक्षणम् ।
अङ्गावुजो भवेद्देश्यः पटहस्यैव वादनम् ॥ ३८४ ॥

कुर्याद्दक्षिणहस्तेन तथा मर्दलवाद्यवत् ।
स्कन्धायुज[1]वदन्येन हस्तेनतदनन्तरम् ॥ ३८५ ॥

स्कन्धायुजमृदङ्गस्थैः मिश्रैश्शब्दैश्चवादनम् ।

इति मार्गपटहलक्षणम् ॥

**एतन्मतोक्तं स्कन्धायुजस्वरूपं निरूप्यते :—**

वक्ष्यते हरिपालेन वाद्यं स्कन्धायुजाभिधम् ॥ ३८६ ॥

आयामो हस्तमात्रः स्यान्मध्योऽष्टाङ्गुलिसम्मितः
पिण्डोऽङ्गुलिमितः कार्यः मुखं सप्ताङ्गुलं मितम् ॥ ३८७ ॥

पादाङ्गुलप्रमाणेन कल्पयेद्वलयद्वयम् ।
सूत्रवेष्टनमार्गेषु रन्ध्रषट्कञ्च कारयेत् ॥ ३८८ ॥

पूर्वोक्तेनप्रकारेण कल्पनीया तथोद्धली ।
द्वे द्वे सकलशे कार्ये पार्श्वयोरर्गले[3]द्वयोः ॥ ३८९ ॥

मध्ये रज्वन्तराले च कुर्यादुदरपट्टिकाम् ।
रज्वन्तरे[2]करंवामं वादनावसरे क्षिपेत् ॥ ३९० ॥

हुडुक्कायाश्चतुर्थांशो नादहेतोश्च वादकः ।
अङ्गुलश्च चतुर्भागं छिद्रमत्र तु कारयेत् ॥ ३९१ ॥

अमुष्यरुचिरां श्लक्ष्णां कुर्वीत स्कन्धपट्टिकाम् ।
स्कन्धायुजस्य वाद्यस्य वामहस्तस्त्रिधा भवेत् ॥ ३९२ ॥

---

1 'स्कन्धायुज' इत्यत्र हरिपालीयमूलमातृकायां 'सुण्डायुज' इति पाठः ।
2 'पट्टिकायां' इति रामकृष्णकविसंगृहीतभरतकोशस्थपाठः ।
3 'पार्श्वयोर्वलय' इति भरतकोशस्थपाठः ।

स्कन्धश्च कूर्परः पश्चान्मणिबन्धनमित्यपि ।
सूचीपूर्वाकर्तरी च तथा डमरुकर्तरी ॥ ३९३ ॥

बोट्टाततो[1] वर्णकश्च वाद्यो दक्षिणहस्ततः ।
मुख्याः पञ्चपुनर्मिश्राः शब्दास्तु बहवः स्मृताः ॥ ३९४ ॥

**यथा** — रेथं । रेधं । नखिखिण । नक तक । तकुत ।

वादकस्त्रिविधोज्ञेय उत्तमादिविभेदतः ।
स्कन्धेन कूर्परेणैव मणिबन्धेन वादनात् ॥ ३९५ ॥

उत्तमोमणिबन्धेन कूर्परेण च मध्यमः ।
केवलस्कन्धजेनैव भवेदधमवादकः ॥ ३९६ ॥

स्कन्धायुजस्य लक्ष्मैतदुदीरितमतःपरम् ।

**इति हरिपालीयोक्तं स्कन्धायुजलक्षणं निरूपितम् ॥**

**एतत्पटहवाद्ये वादनीयाः अष्टाशीति हस्तपाटाः रत्नाकरे द्रष्टव्याः ॥**

**अथ रत्नाकरोक्तं सञ्चलक्षणं लक्ष्यते :—**

पटहस्य हुडुक्कायाः पञ्च सञ्चान् ब्रुवेऽधुना ॥ ३९७ ॥

स्कन्धकूर्परयोस्तद्वदङ्गुष्ठमणिबन्धयोः ।
वामस्य चरणस्यापि कम्पस्सञ्चोऽभिधीयते ॥ ३९८ ॥

**एतदुक्तपटहवादकलक्षणं लक्ष्यते :—**

श्रेष्ठः पाटहिकः सञ्चादङ्गुष्ठमणिबन्धयोः ।
स्कन्धकूर्परसञ्चात्तु नीचः पटहवादकः ॥ ३९९ ॥

---

[1] 'बोल्लवणी'ति भरतकोशस्थपाठः ।

## अथ रत्नाकरोक्तं मृदङ्गलक्षणं लक्ष्यते :—

निर्दोषबीजवृक्षोत्थः पिण्डोऽर्धाङ्गुलसम्मितः ।
एकविंशत्यङ्गुलः स्याद्दैर्घ्ये वाममुखेपुनः ॥ ४००* ॥

चतुर्दशाङ्गुलानि स्युर्दक्षिणे तु त्रयोदश ।
मानं यस्य मनाङ्मध्ये पृथुरेकाङ्गुलाधिके ॥ ४००क ॥

वक्त्राभ्यां चर्मणी वृत्ते घने ये प्रान्तयोस्तयोः ।
चत्वारिंशत्पृथग्रंध्राण्यङ्गुलान्तरवन्ति च ॥ ४००ख ॥

वध्रे तद्रन्ध्रविन्यस्ते सीवनप्रक्रियावति ।
प्रोतोर्ध्वाधःस्थिता दृष्टोदरपृष्ठा च विघ्निका ॥ ४००ग ॥

क्रियते वेष्ट्यते मध्ये त्रिभिर्वध्रैर्दृढं तथा ।
कार्यो गोमूत्रिकाबन्धस्तत्र वध्रद्वयेन च ॥ ४०१ ॥

तथा यथा पिनद्धास्ये भवेतां चर्मणी दृढे ।
कुण्डल्योः प्रान्तयोर्वामकुण्डल्यां सन्निवेश्य च ॥ ४०२ ॥

कच्छां क्षिप्त्वा दक्षिणस्यां कृष्ट्वा द्विगुणतां नयेत् ।
साञ्चलद्वितयां पट्टमयीमष्टाङ्गुलायताम् ॥ ४०३ ॥

यद्वाऽन्यवस्त्रजां शोभानुगां न्यस्येत्कटीतटे ।
निगदन्ति मृदङ्गं तं मर्दलं मुरजं तथा ॥ ४०४ ॥

---

* सप्तमे पृष्ठे ५३ तमश्लोकानन्तरं मुद्रणदोषात् श्लोकसंख्यायां श्लोकत्रयं आधिक्येन परिगणितम् । तत्संख्यापूरणार्थं अत्रएकस्यामेव श्लोकसंख्यायां क,ख,ग इति दर्शितम् ।

प्रोक्तं मृदङ्गशब्देन मुनिना पुष्करत्रयम् ।
अत्यन्ताव्यवहार्यत्वान्निःशङ्को न तनोति तत् ॥ ४०५ ॥

भूतिमिश्रेण भक्तेन चिक्कणेनाति मर्दनात् ।
पिण्डिकां पूरिकाकारां वामवक्त्रे निवेशयेत् ॥ ४०६ ॥

बोहणाख्येन तेनाऽस्यं लिम्पेदल्पेन दक्षिणम् ।
एवं जलधरध्वानगम्भीरो भवति ध्वनिः ॥ ४०७ ॥

निःशङ्केनात्र च प्रोक्ता देवता नन्दिकेश्वरः ।
रक्तचन्दनजो यद्वा खादिरोऽन्यैरयं मतः ॥ ४०८ ॥

त्रिंशदङ्गुलदैर्घ्यश्च पिण्डेत्वङ्गुलसम्मितः ।
एतस्य वामवदनं द्वादशाङ्गुलसम्मितम् ॥ ४०९ ॥

दक्षिणन्तु मितं सार्धैरेकादशभिरङ्गुलैः ।
पाटाश्च तद्धितोटेंहें नं धे मित्यत्र कीर्तिताः ॥ ४१० ॥

तटह्वा दधलाश्चेति पाटानन्यत्र मन्वते ।
इह स्युः पटहोक्ताश्च वर्णाः षोडश कादयः ॥ ४११ ॥

अधिकान् रुह[1]मान् वर्णान् वर्णयन्त्यपरेत्विह ।
तेषु तद्धयादयः सप्त केवलाः शुद्धसंज्ञिताः ॥ ४१२ ॥

सस्वरैरस्वरैर्युक्तैरयुक्तैर्वा कखादिभिः ।
व्यापकाख्यैः षोडशभिर्मिश्रास्ते कूटसंज्ञिताः ॥ ४१३ ॥

कूटमिश्रास्तु ते शुद्धा बुधैः खण्डाभिधा मताः ।
छन्दसा सूरि[2]हृद्येन स्फूर्तिमूर्तिरुदारधीः ॥ ४१४ ॥

---

[1] 'भक्ष' इति रत्नाकरमूलग्रन्थपाठः ।
[2] 'भूरि' इति रत्नाकरमूलग्रन्थ पाठः ।

कविः कवयति श्लोकं श्रवणोत्सवदैः पदैः ।
यथातथा क्वचित्तालैर्वर्णा ँल्लय[1]मनोहरान् ॥ ४१५ ॥

विधाय वादको वाद्यप्रबन्धान्बद्धुमर्हति ।
इमं कवितकाराख्यं वादकं ब्रुवते जनाः ॥ ४१६ ॥

## हरिपालीये

कथ्यतेऽतः परं सम्यङ्मृदङ्गस्य च लक्षणम् ।
कान्तारशैलसम्भूतैः सरस्सरित्समुद्भवैः ॥ ४१७ ॥

नातिपक्वैर्नचापक्वैः खदिरैर्हरिचन्दनैः ।
दारु कार्यं मृदङ्गस्य प्रमाणं त्रिविधं भवेत् ॥ ४१८ ॥

सार्धं वितस्तित्रितयं वितस्तिप्रमितं मुखम् ।
उन्नतं मध्यमं कल्प्यं मृदङ्गे नृत्तसम्मते ॥ ४१९ ॥

चतुरङ्गुलसंयुक्तं वितस्तित्रयमात्रकम् ।
वर्णान्धज[2] भवेद्वक्त्रं कञ्चिदूनवितस्तिकम् ॥ ४२० ॥

स्त्रीणां योग्यो मृदङ्गस्स्याद्वितस्तित्रयमातृकः ।
वाध्रेण बन्धनं कार्यमार्षभेण च चर्मणा ॥ ४२१ ॥

कबळं कल्पयेत्प्राज्ञो मृदङ्गस्य सुविस्तृतम् ।
अन्तरेण भवेत्कार्यं मर्दलस्यैव चर्मणा ॥ ४२२ ॥

---

[1] 'वर्णत्रय' इति रत्नाकरमूलग्रन्थपाठः ।

[2] 'ढव्रणांगो' इति हरिपालीयमूलमातृकापाठः ।

भस्म भक्तसुसम्मिश्रं चतुरङ्गुलमात्रतः ।
वामभागे मृदङ्गस्य वादनादौ प्रलेपयेत् ॥ ४२३ ॥

मार्जयेद्गोहनं व्यस्तो विरामे वादनस्यतु ।
लेपो दक्षिणभागस्थः करणीत्याख्यया भवेत् ॥ ४२४ ॥

## अथ मतङ्गमते

रक्तचन्दनखर्जूरखादिराद्यैरयं मतः ।
निम्बेऽथवा विजानीत्काण्डेऽर्धाङ्गुलसम्मितः ॥ ४२५ ॥

दक्षिणास्ये विशेषेण वलयाकृतिना ततः ।
अष्टविंशत्यङ्गुलीभिः परिवृत्तं सुशोभनम् ॥ ४२६ ॥

वामास्ये तद्वदेव स्यादष्टाविंशतिभिः पुनः ।
अङ्गुलीभिः परिवृतं वामास्यं मर्दलस्य तु ॥ ४२७ ॥

चर्मत्रिपुरसंयुक्तं अष्टाविंशतिरेचितम् ।
चर्मबद्धं तथैव स्याद्गोमूत्राकृतिनापि च ॥ ४२८ ॥

वामं षडुन्नतं प्रोक्तं पिण्डं स्यात्पिण्डवेदिभिः ।
अष्टाङ्गुलमितं प्रोक्तं दक्षिणं पिण्डमानकम् ॥ ४२९ ॥

तों जं झनादि शब्दानां माननं दक्षिणं स्मृतम् ।
एवं मर्दलमानन्तु भरतेन प्रकीर्तितम् ॥ ४३० ॥

पिण्डस्य देवता शम्भुः चर्मणः कमलासनः ।
वासुकिश्चर्मरज्ज्वाश्च मुरो(?)भाण्डस्य दैवतम् ॥ ४३१ ॥

आकाशो योगहस्तस्य नन्दिस्सर्वाधिदैवतः ।
नादात्मको महादेवः प्रसीदति दिने दिने || ४३२ ||

अथ मतान्तरे

पुरा मुरासुरं भित्वा भगवान्देवकीसुतः ।
तत्कलेबरमादाय मर्दलं कृतवान् भुवि || ४३३ ||

पिनद्धं चर्मणा तस्य सिराभिर्दृढबन्धनम् ।
कण्ठध्वनिश्च तस्यैव तेनाऽसौ मुरजोऽभवत् || ४३४ ||

मुरजन्तं समादाय दत्तवान् नन्दिने हरिः ।
मुरजस्य ततो लोके देवता नन्दिकेश्वरः || ४३५ ||

नन्दिकेशं समाराध्य मुरजं वादयेद्बुधः ।
मुरजानाम्प्रभेदाः स्युरङ्क्याऽलिङ्ग्योऽर्ध्वगास्त्रयः || ४३६ ||

हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्ततोर्ध्वगः ।
आलिङ्ग्यश्चैव गोपुच्छः मध्यदक्षिणवामगः || ४३७ ||

हरीतकीसमं रूपमङ्क्ये चैव प्रकीर्तितम् ।
अङ्गुष्ठाङ्गुलमानेन त्रयः पञ्चाशदङ्गुलम् || ४३८ ||

दीर्घं स्यान्मध्यमं स्थूलं तावदङ्गुलिवर्तुलम् ।
उभयोरग्रयोश्चापि द्वादशाङ्गुलवर्तुलम् || ४३९ ||

चतुरङ्गुलविस्तारं कर्णिकामध्यतोभवेत् ।
कर्णिकाया बहिर्भागे वलयेन समावृतम् || ४४० ||

मध्यतो ग्रन्थिसंयुक्तं मृदङ्गं रचयेद्बुधः ।
देवते कर्णिकाद्वन्द्वे सूर्यचन्द्रमसावुभौ ॥ ४४१ ॥

वलयद्वितयस्यापि परिवेषोऽधिदेवता ।
ग्रन्थेस्तु विश्वकर्मा स्याद्गन्धर्वा वध्रदेवताः ॥ ४४२ ॥

मणिचूडमणिग्रीवौ चर्मणोरधिदेवते ।
स्वस्यापि मर्दलस्यात्र या रज्जुर्मध्यमे स्थिता ॥ ४४३ ॥

तस्यास्तु वासुकिर्देवो मर्दलः सर्वदैवतः[1] ।

## अथ भारतीये

अतः परं प्रवक्ष्यामि आतोद्यानान्तु लक्षणम् ॥ ४४४ ॥

त्रिधा क्रिया मृदङ्गानां हरीतक्रियया श्रया(?) ।
तथा गोपुच्छरूपा च भवत्येषां स्वरूपतः ॥ ४४५ ॥

हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्ततोर्ध्वगः ।
आलिङ्ग्यश्चैव गोपुच्छाकृतिरेषा प्रकीर्तिता ॥ ४४६ ॥

तालास्त्रयोर्ध्वतालश्च मृदङ्गोऽङ्किक इष्यते ।
मुखे तस्याङ्गुलानि स्युस्त्रयोदश चतुर्दश ॥ ४४७ ॥

ततोर्ध्वकश्च कर्तव्यश्चतुस्तालप्रमाणकः ।
मुखन्तस्याङ्गुलानि स्युरष्टावेव समासतः ॥ ४४८ ॥

---

[1] यद्यपि इदं श्लोकार्धं मातृकायां पतितम् तथापि भरतकोशे मुरजवाद्यलक्षणे दृश्यते ।

पणवश्चापि कर्तव्यो दीर्घत्वे षोडशाङ्गुलः ।
कृशो मध्यो ऽङ्गुलान्यष्टौ पञ्चाङ्गुलमुखं तथा ॥ ४४९ ॥

ओष्ठं तत्र च कर्तव्यं तद्गैरध्यर्धमङ्गुलम् ।
मध्ये च सुषिरं तस्य चत्वार्येवाङ्गुलानि तु ॥ ४५० ॥

दर्दुरस्य च टंकारो भवत्यभिमुखस्तथा ।
मुखञ्च तस्य कर्तव्यं घटस्य सदृशं बुधैः ॥ ४५१ ॥

द्वादशाङ्गुलविस्तीर्णम्पीनोष्ठञ्च समन्ततः ।

## इति मृदङ्गलक्षणम् ॥

### अथ रत्नाकरोक्तं मर्दलकाष्ठलक्षणं लक्ष्यते :—

उक्तौ प्रकृतिदारूणामनुक्तौ वा विकल्पतः ॥ ४५२ ॥

ज्ञेयो दारववाद्यानां खदिरो रक्तचन्दनः ।
सर्वेषु स्युर्यथायोगं पाटाः पाटहमर्दलाः ॥ ४५३ ॥

नीरसोच्छ्रितभूजाताज्जीर्णाद्वाताहतात्तरोः ।
निर्भिद्योत्सारिते गर्भे शेषाद्वाद्यानि कारयेत् ॥ ४५४ ॥

पूर्वप्ररोहे छिन्ने ऽन्यो यः प्ररोह प्ररोहति ।
तदुद्भवद्रुमोद्भूतं वाद्यं सर्वं प्रशस्यते ॥ ४५५ ॥

गर्भस्योत्सारणं त्वेतद् वेणोरन्यत्र पादपे ।
तरूणां जातयस्तिस्रः पित्तला वातला तथा ॥ ४५६ ॥

श्लेष्मला चेति तत्र स्यात्पित्तला नीरसक्षितौ ।
अत्यल्परसभूजाता वातला श्लेष्मला पुनः ॥ ४५७ ॥

जलाशयसमीपस्थरससंयुतभूमिजा ।
पित्तला ह्युत्तमा जातिर्वातला त्वधमा भवेत् ॥ ४५८ ॥

श्लेष्मला वर्ज्यते रूक्षो वृक्षोऽपि छेदनात्पुरा ।
कोमलत्वं व्रणग्रन्थिभेदान्दारुषु वर्जयेत् ॥ ४५९ ॥

**इति रत्नाकरोक्तं मर्दलकाष्ठलक्षणम् ॥**

**अथ रत्नाकरोक्तं चर्मलक्षणं लक्ष्यते :—**

षाण्मासिकस्य वत्सस्य चर्म स्यात्पुटबन्धने ।
अन्येद्विवत्सरस्याहुस्तत्र लक्ष्येषु दृश्यते ॥ ४६० ॥

वृद्धस्य वृषभस्यास्य चर्मणा वध्रकल्पना ।
कुन्देन्दुहिमसङ्काशं आम्रपल्लवसन्निभम् ॥ ४६१ ॥

स्नायुमांसविहीनञ्च चर्म गोसम्भवञ्च यत् ।
शीतोदके निशामेकां वासयित्वा समुद्धृतम् ॥ ४६२ ॥

वाद्यावनहनार्थं तद्ग्राह्यं श्रीशार्ङ्गिणोदितम् ।

**भारतीये**

अतः परं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥ ४६३ ॥

न जरोपहतं चर्म न च काकमुखाहतम् ।
न मेदोपगतं छिन्नं न च धूमादिदूषितम् ॥ ४६४ ॥

षड्दोषैश्च विनाभूतं चर्म निर्वर्तितं गवाम् ।

**इति चर्मगुणाः ॥**

## अथ रत्नाकरे चर्मदोषाः :—

मेदोदुष्टं जराक्रान्तं छिन्नं काकमुखाहतम् ॥ ४६५ ॥

अग्निधूमहतं जीर्णं न वाद्ये चर्म कर्मकृत् ।

इति चर्मदोषाः ॥

## अथ रत्नाकरोक्तं मार्दलिकलक्षणं यथा :—

चतुर्विधो मार्दलिको वादको मुखरी तथा ॥ ४६६ ॥

ततः प्रतिमुखर्येकस्तुर्यो गीतानुगो मतः ।
वादको वादकर्ता स्यद्वादः पक्षपरिग्रहः ॥ ४६७ ॥

स्वपक्षसाधनं तद्वत्परपक्षस्य दूषणम् ।
येऽन्ये जल्पवितण्डाद्या वादभेदाः सलक्षणाः ॥ ४६८ ॥

न तान् ब्रवीमहि ग्रन्थप्रपञ्चभयभङ्गुरः ।
वादे च वादनं कार्यं प्रथमं ताडना[1]भिधम ॥ ४६९ ॥

मर्दले तालरहिते बोहणेन विना ध्वनिः ।
ग्रो दे ह ड ड गित्यादि कृतोऽस्मो ताडनं तु तत् ॥ ४७० ॥

पोडवाडं घनरवं हस्तावत्यर्थमाचरेत ।
मुक्तशब्दात्मकं देहदडादप्रमुखं ततः ॥ ४७१ ॥

उच्चारं[2] स्थापनं पश्चात् वादयेत्तदथोच्यते ।
मुखयोर्बोहणं दत्वा वादयेद्वाममाननम् ॥ ४७२ ॥

---

[1] 'आटन 'मिति रत्नाकरमूलग्रन्थपाठः ।
[2] 'उधार 'मिति रत्नाकरमूलग्रन्थपाठः ।

गद्भदेमिति, वक्त्रं गद्दं दोस्याति दक्षिणम् ।
ततो मध्यलये ताले द्वितीये मुखयोर्द्वयोः || ४७३ ||

कुर्यान्नादसमायोगमथोच्चोच्चं दलत्रयम् ।
पृथग्विलम्बिते मध्ये द्रुते चैव लये क्रमात् || ४७४ ||

तथैकद्वित्रिथोङ्काररचितं ग्रहमोक्षभाक् ।
आलसिवच्च त्रिस्थानशुद्धं हस्तद्वयेन यत् || ४७५ ||

मधुरं वाद्यते तद्ज्ञैः स्थापनं तदुदाहृतम् ।
ततस्थोङ्कारबहुलं ग्रहमोक्षे ततो भवेत् || ४७६ ||

चतुरश्रत्र्यश्रमिश्रखण्डेष्वेकेन केनचित् ।
तालेन टाकणीवादौ कर्तव्यौ तदनन्तरम् || ४७७ ||

तयोरेकमरो जोडा चेति भेधद्वयं मतम् ।
कृत्वा श्रमस्य वहनीं यस्तालेऽष्टकलादिके || ४७८ ||

वाद्यखण्डस्तालकलाप्रस्तारानुगतः कृतः ।
अखण्डितष्टाकणी सैकरसत्वं सकृत्कृतेः || ४७९ ||

एकद्वित्रिचतुर्वारं शुद्धाभ्यसनतो भवेत् ।
इह श्रमवहण्याख्यः प्रकारो वादने यथा || ४८० ||

**तद्धित्तोथें । तत धिधि थो थो ठें ठें । त त त धिधिधि ।**

**थो थो थो । ठें ठें ठें । ततत्त । धिधिधिधि ।**

**थो थो थो थो । ठें ठें ठें ठें ॥**

**इति श्रमवहणीं कृत्वा**

एकसरटाकणी यथा :—

तकधिकट । तकधिकट । धिकटतक । तकधिकट ।
तक तकधिकट । धिकट धिकट । ततधिकट ।[1]

इत्यष्टौ वाद्यखण्डस्य खण्डा अष्टासु कलासु, सैव द्विवारं जोडा ॥

टाकणीवत्समस्तं प्राक्खण्डं कृत्वा ततः परम् ।
खण्डं खण्डं द्विर्द्विवारं वाद्यते वाद्यसंज्ञके ॥ ४८१ ॥

तत्रैकसरजोडात्वं टाकणीवदुदाहृतम् ।

यथा :—

टि टि टि रि । टि टि टि टि । ट क ट । कि ड क जें ।
धरिकत धरि । टंगण गण धरि । दद् धरि गिड दग ।
दद् धरि गिड धग । दधरि । दिधरि । दिधरि । तगे गड्ड कुधरि तक कट तत्तकु ॥[1]

इति षोडशकले ताले षोडशसु कलासु षोडशखण्डकं
वाद्यं कृत्वा तान षोडशखण्डान् द्विर्द्विः कुर्यात् ॥

इत्येकसरवादः ॥
द्विष्कृतो जोडा ॥

ध (? त) कारेण च सर्वेषामेतेषां त्याग इष्यते ॥ ४८२ ॥

कुर्यात्ततो धिगि धिगि ताटवादादिकं तथा ।
वर्णा धिगिधिगीत्येते प्रोक्ता दिगिदिगिर्बुधैः ॥ ४८३ ॥

यः खण्डोऽतिद्रुते माने ताडवादः स उच्यते ।
अन्येऽपि वादविधयोऽप्यूह्यन्नामध्वनामुना ॥ ४८४ ॥

---

[1] अयं पाटाक्षरस्तोमः रत्नाकरमूलग्रन्थपाठापेक्षया विभिन्नः ।

इति गीतानुगः ॥

इति वादप्रकाराणां सम्यक्त्वे विजयो भवेत् ।

इति वादकलक्षणम् ॥

अथ मुखरीलक्षणं कथ्यते :—

कर्ता वाद्यप्रबन्धानां नृत्तशिक्षाविचक्षणः ॥ ४८५ ॥

गीतवादित्रनिष्णातः सुरेखोऽन्तर्मुखश्च यः ।
अर्धाङ्गमिव नर्तक्या वादयेद्रङ्गभूगतः ॥ ४८६ ॥

वादकैः प्रेक्षितमुखो वादनादौ मुखर्यसौ ।

इति मुखरीलक्षणम् ॥

किञ्चिद्धीनो मुखरिणः प्रोक्तः प्रतिमुखर्यसौ ॥ ४८७ ॥

इति प्रतिमुखरी ॥

अथ गीतानुगः :—

शुद्धसालगगीतानां वर्णान् कठिनकोमलान् ।
समांश्च विषमान्नादं मध्यं मन्द्रञ्च तारकम् ॥ ४८८ ॥

प्रौढं च मधुरं सम्यगनुगच्छति वादनात् ।
पूर्वभागे तथाऽभोगे झक्काप्रहरणे क्रमात् ॥ ४८९ ॥

कुर्याद्वैकल्पिके यद्वा समग्रं गीतमाश्रिते ।
समुच्छ्रिते ऽनुलोम्याद्वैलोम्याद्वोभयेन वा ॥ ४९० ॥

निःसारौ सालगे गीते यस्तं गीतानुगं विदुः ।
क्रमाच्चकारथोंकारौ स कुर्याद्ग्रहमोक्षयोः[1] ॥ ४९१ ॥

इति रत्नाकरोक्तं चतुर्विधमार्दलिकलक्षणम् ॥

---

[1] अयं श्लोकार्धः ग्रन्थकारेण नोद्धृतः ।

**अथ मतङ्गमते मार्दङ्गिकलक्षणं यथा :—**

रूपवान् नृत्तशास्त्रज्ञः तालमार्गविशारदः ।
विहङ्गमादिशब्दानां सम्भेदनविशारदः ॥ ४९२ ॥

लयमार्गैकनिष्णातो मर्मज्ञः सावधानकः ।
एवंविधगुणोपेतो मुरजस्य तु वादकः ॥ ४९३ ॥

अतीतानागतविधौ लुप्तचिन्तापको (?) यथा ।
तच्च....चैनादिंश्च सुयोगे तर्जनाधिके (?) ॥ ४९४ ॥

जंझानादि शब्दानां घूङ्कारेषु नियोजितः ।
झंझाझनादिशब्दैस्तु ताले मिश्रे तु योजितः ॥ ४९५ ॥

सुकुमारप्रयोगेषु स्त्रीप्रायनटनेषु च ।
अतीव मृदुतां नीत्वा वादयेद्रङ्गभूगतः ॥ ४९६ ॥

उद्धतप्रायनृत्तेषु साटोपेषु यथातथा ।
वादयेद्वाद्चतुरो मन्द्रादिषु विशारदः ॥ ४९७ ॥

नृत्तेषु मन्द्रभावज्ञः ...तिजातिविशारदः ।
स्वयं वाद्यप्रबन्धेषु मुखरावं नियोजित ॥ ४९८ ॥

अथवार्धाङ्गसंयुक्तो[1] युक्तो मार्दलिको बुधैः ।

**इति मतङ्गमतोक्तं मार्दङ्गिकलक्षणम् ॥**

**अथ भारतीयोक्तं मार्दङ्गिकादिवादकलक्षणम् :—**

अत ऊर्ध्वं प्रवक्ष्यामि वादकानान्तु लक्षणम् ॥ ४९९ ॥

---

[1] अर्थाङ्गसंयुक्तः ?

गीतपदपाठ्यकालग्रहमोक्षविशारदोऽथ लघुहस्तः ।
पीठाधारणविधिज्ञः सिद्धिस्थाने ध्रुवाकुशलः ॥ ५०० ॥
कलाभिरतो मधुहस्तः सुनिविष्टो रक्तिमार्जनो बलवान् ।
सुनिहितशरीरबुद्धिः संरिद्धो वादकः श्रेष्ठः ॥ ५०१ ॥
आलेपनप्रमाणज्ञश्चतुर्मार्गकृतश्रमः ।
प्रतिगृहीता सिद्धिनां अङ्गदोषविवर्जितः ॥ ५०२ ॥
स्वभ्यस्तकरणः साम्ये गीतज्ञो गणितग्रहः ।
प्रसङ्गीतप्रयोगज्ञः मृदङ्गी तु भवेद्गुणैः ॥ ५०३ ॥
शान्तोऽथ हस्तकालज्ञः छिद्रावरणपण्डितः ।
स्वभ्यस्तकरणश्चैव भवेत्प्रेक्षाधिको गुणैः ॥ ५०४ ॥
निश्चलो निपुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवेदी च दर्दुरी स प्रशस्यते ॥ ५०५ ॥
एतत्सर्वं नाट्ययोग्यं समीक्ष
प्रोक्तं वाद्यं सर्वलोकानुसारात् ।
नोक्तं यच्चेदागमात् शास्त्रबुद्ध्या
सद्भिः कार्यं मार्गजातिं समीक्ष्य ॥ ५०६ ॥
स्फुटप्रकारं विषमं[1] विभक्तं सन्नं[2] विशुद्धं करलेपनञ्च ।
त्रिमार्जनं पूरितरागयोगं मृदङ्गवाद्यं गुणतो वदन्ति ॥ ५०७ ॥
वाद्येषु यत्नः प्रथमन्तुकार्यः
शय्यां हि नाट्यस्य वदन्तिवाद्यम् ।
वाद्येऽपि गीतेऽपि सुप्रयुक्ते
नाट्यस्यशोभा न विनाशमेति ॥ ५०८ ॥

**इति मृदङ्गादिवादकलक्षणं निरूपितम् ।**

---

[1] विशदं, [2] रक्तं, इति भारतीयमूलग्रन्थपाठः ।

### अथ ग्रन्थान्तरोक्ता मृदङ्गवाद्यहस्ता निरूप्यन्ते :—

वादकेनापि धार्याः स्युः करयोः क्षुद्रघण्टिकाः ।
हस्तयोः क्षुद्रघण्टाञ्च नन्दिकेशो ह्यधारयत् ॥ ५०९ ॥

वाद्यहस्तप्रकारांश्च वादयेद्वाद्यधारकः ।
वाद्यते रक्तिमिश्रञ्च मृदङ्गादिरिति स्मृतः ॥ ५१० ॥

ब्रह्महत्या दक्षिणेन गोहत्या वामहस्ततः ।
हस्तद्वये समं वाद्यमुत्तमं परिकीर्तितम् ॥ ५११ ॥

समोहस्तः समोहस्तः मृदङ्गे परिकीर्तितः ।
सिंहास्यं चामरञ्चैव घण्टिकानिगलं तथा ॥ ५१२ ॥

वस्त्रानि भूषणानीति वस्त्रखण्डान्तथैव च ।
परिवर्ता क्षुद्रघण्टां धारयेद्वाद्यधारकः ॥ ५१३ ॥

पताकशुकतुण्डौ च काङ्गूलः शीकरस्तथा ।
शिखरे पृष्टभागश्चार्धचन्द्रश्चोर्णनाभकः ॥ ५१४ ॥

मुकुलश्च कपित्थश्च त्रिपुंड्रं वक्रचूडकम् ।
एतेह्यसंयुता हस्ता वाद्यहस्ताः प्रकीर्तिताः ॥ ५१५ ॥

इति ग्रन्थान्तरोक्ता मृदङ्गवाद्यहस्तादयः ॥

### अथ हरिपालमतोक्ता मृदङ्गवाद्यहस्ता भण्यन्ते :—

खुत्ता बद्धा खिरिविला चोपटस्तदनन्तरम् ।
पताके द्वे डमरुके सूचीवर्णक इत्यपि ॥ ५१६ ॥

अमी मार्दङ्गिका हस्ताः समुद्दिष्टा नवात्मकाः ।

इति मार्दङ्गिकहस्तोद्देशः ॥

एतेषां लक्षणान्युच्यन्ते :—

एकदेशेन हस्तस्य स्पृष्टचर्म मनागिव ॥ ५१७ ॥

यस्यां विधीयते कर्म सा खुत्तेत्यभिधीयते ।

इति खुत्ता ।

पताकाख्येन हस्तेन सुसंश्लिष्टतलेन च ॥ ५१८ ॥

क्रियते या विधानज्ञैः सा बद्धा परिकीर्तिता ।

इति बद्धा ।

हस्तेन स्यात्खिरिविला विरलाङ्गुलिना परम् ॥ ५१९ ॥

इति खिरिभिला ।

मुहुः पताकहस्तेन हन्यते यः स चोपटः ।

इति चोपटः ।

अथ हरिपालीयोक्ता मृदङ्गवाद्यशब्दभेदाः :—

चत्वारो मर्दलस्यास्य मुख्याः शब्दाः प्रकीर्तिताः ॥ ५२० ॥

पताकाख्येन हस्तेन वामेन हननं यदा ।
एकदेशे तु कार्योऽस्य तदा समुदयो भवेत् ॥ ५२१ ॥

अनेनैव क्रमेण स्याद्दक्षिणेन करेण हि ।
मध्यदेशे तु हननं पताका वामहस्ततः ॥ ५२२ ॥

द्रोङ्कारः स्यात्क्रमेणैव दक्षिणेन तदा भवेत् ।
हस्तेन हननं यत्र तत्र टेङ्कारसंभवः ॥ ५२३ ॥

तद्धित्थोठेमिति प्रोक्ताः शब्दा शुद्धा भवन्त्यमी ।
मिश्राणामपि शब्दानामुत्पत्तिः कथ्यतेऽधुना ॥ ५२४ ॥

अङ्गुल्यग्रेण मूलेन वामहस्तस्य शीघ्रतः ।
हननात्तकटाख्यस्य शब्दस्योत्पत्तिरुच्यते ॥ ५२५ ॥

अपसव्येन हस्तेन पूर्वोक्तक्रमवर्तिना ।
धिकटास्य शब्दस्य सिद्धेर्हननतो भवेत् ॥ ५२६ ॥

सूचीमुखेन हस्तेन भूयो भूयो विवृत्य च ।
जायते हननेनैव शब्दो दरकटाभिधः ॥ ५२७ ॥

यदा डमरुकाख्येन विवृत्य च पुनः पुनः ।
हस्तेन हनने सिद्धे तदा दरकटद्वयम् ॥ ५२८ ॥

चतुराख्येन हननं वामेनैकत्र सम्भवेत् ।
यदा हस्तेन नियतं तदा धोकारसम्भवः ॥ ५२९ ॥

हननादपसव्येन क्रमेणैवन्तु तां क्रियाम् ।
कनिष्ठावर्जमितरैरङ्गुल्यग्रैर्यदा भवेत् ॥ ५३० ॥

पर्यायाद्धननं सिद्धयै तदा धोट्टायतोदयः ।
सम्मिश्रा बहवः शब्दाः संभवन्त्यपरे पुनः ॥ ५३१ ॥

तेऽपि प्रयोगकालेषु द्रष्टव्याः स्युः प्रयोक्तृभिः ।
इत्थं मृदङ्गलक्ष्माह विचारचतुराननः ॥ ५३२ ॥

**इति हरिपालीयोक्ता मृदङ्गवाद्यशब्दभेदाः ॥**

## अथ रत्नाकरोक्ता मार्दङ्गिकगुणदोषा उच्यन्ते :—

वर्णव्यक्तिः मृदेहत्वमनुयायप्रवीणता ।
मधुरोद्धतवाद्येषु विज्ञता हस्तलाघवम् ॥ ५३३ ॥

अवधानं श्रमजयो मुखवाद्येषु पाटवम् ।
रक्तिराविद्धकस्यानुवृत्तिर्बहुलता तथा ॥ ५३४ ॥

यतितालल्लयज्ञत्वं नृत्तानुगमनं तथा ।
गुणा मार्दलिकस्यैते दोषः स्यात्तद्विपर्ययः ॥ ५३५ ॥

इति मार्दलिकगुणदोषाः ॥

तद्वृन्दं द्वित्रिचतुरैस्तद्ज्ञैर्मर्दलधारिभिः ।
प्राधान्येन विधातव्यं तैर्मुखर्यनुवर्तनम् ॥ ५३६ ॥

इति रत्नाकरोक्तं मार्दङ्गिकवृन्दलक्षणम् ॥

## अथ क्रमप्राप्तं रत्नाकरोक्तं हुडुक्कालक्षणं लक्ष्यते :–

या हस्तसम्मिता दैर्घ्येऽष्टाविंशत्यङ्गुला पुनः ।
परिधावङ्गुलिमिता पिण्डे सप्ताङ्गुले मुखे ॥ ५३७ ॥

मण्डल्यौ वक्त्रयोर्वल्ली मध्यादेशादशाङ्गुले ।
सपादाङ्गुलकस्थौल्ये उद्वलीकृतबन्धने ॥ ५३८ ॥

वदनाभ्यां सह स्यातां कुर्याद्रन्ध्राणि षट् तयोः ।
बन्धरज्जुनिवेशार्थं पुरोभागेऽर्गलात्रयम् ॥ ५३९ ॥

कलशाकलितं व्यन्तं पश्चाद्भागेऽर्गलाद्वयम् ।
बन्धसूत्रान्तरे मध्ये भवेदुदरपट्टिका ॥ ५४० ॥

अङ्गुलत्रयविस्तारा श्लक्ष्णा हृदयहारिणी ।
द्वात्रिंशत्तन्तुसंजातरज्वा पक्षद्वयं दृढम् ॥ ५४१ ॥

बद्ध्वा तत्रोत्कक्षकौ च विधाय स्कन्धपट्टिकाम् ।
तयोर्द्विगुणितां न्यस्येदङ्गुलार्धार्धसम्मितम् ॥ ५४२ ॥

छिद्रं यस्याश्चतुर्थांशे नादोद्बोधविधायकम् ।
हुडुक्का सा बुधैः प्रोक्ता तस्याश्च स्कन्धपट्टिकाम् ॥ ५४३ ॥

न्यस्य स्कन्धे दक्षिणेन पाणिना वादनं भवेत् ।
उदरे पट्टिका प्रोक्ता तस्यां वामं निवेशयेत् ॥ ५४४ ॥

देवता मातरः सप्त शार्ङ्गदेवेन कीर्तिताः ।
कुर्वीत पाटहान् वर्णानिह डेंकारवर्जितान् ॥ ५४५ ॥

अत्रान्यैरधिकावुक्तौ मझेंकारौ मनीषिभिः ।
लक्षज्ञास्त्वावजं प्राहुरिमां स्कन्धावजं तथा ॥ ५४६ ॥

इति हुडुक्का लक्षणम् ॥

**अथ रत्नाकरोक्तं करटावाद्यस्वरूपं निरूप्यते :—**

बीजवृक्षोद्भवा पिण्डेऽङ्गुलतुर्यांशसंमिता ।
एकविंशत्यङ्गुला स्याद्दैर्घ्ये हस्तमिताथवा ॥ ५४७ ॥

परिधौ दधती मानं या चत्वारिंशदङ्गुलम् ।
चतुर्दशाङ्गुले वक्त्रे केषाञ्चिद्द्वादशाङ्गुले ॥ ५४८ ॥

मण्डल्यौ लोहजे सूत्रवेष्टिते चर्मबन्धने ।
परिधे सम्मिते ते च द्विचत्वारिंशदङ्गुलैः ॥ ५४९ ॥

तिस्रस्तिस्रस्तथा तन्त्रीर्मुखयोर्वलयद्वयम् ।
दधतोः कवलव्यासं चतुर्दशभिरन्वितम् ॥ ५५० ॥

रन्ध्रैस्तेष्वेकान्तरेषु विम्रिकास्तावतीः क्षिपेत् ।
द्वाभ्यां द्वाभ्यां विम्रिकाभ्यां बन्धो मत्स्याकृतिर्भवेत् ॥ ५५१ ॥

यस्यास्तां करटामाहुः प्रान्तयोः प्रान्तबद्धया ।
कच्छया स्कन्धदेशे तां कक्ष्यां वा वादने वहेत् ॥ ५५२ ॥

चर्चिका देवता चास्या पाटास्तु करटेत्यमी ।
वादनन्तुकराभ्यां[1] तु शार्ङ्गदेवेन कीर्तितम् ॥ ५५३ ॥

टिरिकीर्तिकटीरीति प्रायः पाटद्वयं मतम् ।

इति रत्नकरोक्तं करटावाद्यलक्षणम् ॥

**अथ हरिपालीयोक्तं करटालक्षणम् यथा :—**

करटीलक्षणं सम्यगुच्यते हरिभूभुजा[1] ॥ ५५४ ॥

चतुर्दशाङ्गुलमुखी त्वेकविंशाङ्गुला मता ।
चर्मणा परिणद्धास्या तिस्रस्तिस्रस्ततः परम् ॥ ५५५ ॥

तन्त्री सम्यग्विधेया स्यात् मुखे कार्ये सुविस्तृते ।
वलये कवलव्याप्ते सुषिराणि चतुर्दश ॥ ५५६ ॥

---

[1] 'कुडुपाभ्या' मिति रत्नाकरमूलग्रन्थपाठः ।

[1] मातृकायां नोद्धृतः ।

ग्रीवायां प्रान्तयोः कब्र्योः कच्छा कार्या विशेषतः ।
हस्तद्वयेन क्रियते करटीवादनक्रमः ॥ ५५७ ॥

आयसं दण्डमथवा शार्ङ्गदण्डमथापि वा ।
वक्रिताग्रं विधायैतदमुना वादयेद्बुधः ॥ ५५८ ॥

ततः करटिकाशब्दाश्चत्वारस्ते यथास्थिताः ।

खरट खरट । किरिखिटक ॥ धुनकिटिखः ख ख ॥

## इति हरिपालीयोक्तं करटावाद्यस्वरूपं निरूपितम् ॥

## अथ रत्नाकरे घटवाद्यं निरूप्यते :—

घनः श्लक्ष्णः सुपक्कश्च स्तोकवक्त्रो महोदरः ॥ ५५९ ॥

पाणिभ्यां वाद्यते तद्ज्ञैश्चर्मनद्धाननो घटः ।
कथिता पाटवर्णा ये मर्दले ते घटे मताः ॥ ५६० ॥

## इति घटवाद्यलक्षणम् ॥

## अथ रत्नाकरोक्तं घडसवाद्यलक्षणम् निरूप्यते :—

हुडुक्कयैव घडसो व्याख्यातः किन्तु मण्डली ।
दक्षिणस्योद्धलीबद्धा वामा रज्वा नियन्त्रिता ॥ ५६१ ॥

औदर्यां पट्टिकायान्तु वामोऽत्र न निवेश्यते ।
गोंकारबहुलं चामुं वादयेदिति तद्विदः ॥ ५६२ ॥

अङ्गुष्ठमध्यमाङ्गुल्योर्मर्दनाद्भाग अग्रतः[1] ।

---

[1] 'मदनाक्ताग्रभागतः' इति रत्नाकरमूलग्रन्थपाठः ।

दक्षिणेन करेणास्य घोषणाद्[1] घोङ्कृतिर्भवेत् ॥ ५६३ ॥

घातोऽङ्गुलीभिर्वामस्य वामाङ्गुष्ठेनपीडनम् ।

इति घडसवाद्यलक्षणम्

अथ रत्नाकरोक्तं ढवसवाद्यं निरूप्यते :—

स्याद्धस्तदैर्घ्यः परिधौ स नवत्रिंशदङ्गुलः ॥ ५६४ ॥

द्वादशाङ्गुलके वक्त्रे वल्लीवलयसंयुते ।
(यो धत्ते सप्त सप्तापि रन्ध्राणि वलयद्वये ॥ ५६५ ॥

तथा कवलयोस्ताभ्यां तुण्डे वलयसंयुते)[2] ।
विधाय गाढं बध्येते रन्ध्रविन्यस्तदोरकैः ॥ ५६६ ॥

यस्यासौ ढवसः प्रोक्तः शार्ङ्गदेवेन सूरिणा ।
स्कन्धे निक्षिप्य कक्षे तं वामहस्तेन वादयेत् ॥ ५६७ ॥

वामास्ये दक्षिणस्थेन कुडुपेन तु दक्षिणे ।
ढंङ्कारपाटवर्णैश्च रूढोऽयं ढवसो जने ॥ ५६८ ॥

इति ढवसलक्षणम् ॥

अथ रत्नाकरोक्तं ढक्कावाद्यलक्षणं लक्ष्यते :—

व्याख्याता ढवसेनैव ढक्का किन्तु मुखद्वयम् ।
त्रयोदशाङ्गुलं तस्या धृत्वा तां वामपाणिना ॥ ५६९ ॥

---

[1] 'आस्ये वर्षणादि'ति रत्नाकरमूलग्रन्थपाठः ।

[2] अयं श्लोकः ग्रन्थकृता नोद्धृतः ।

तद्ज्ञो दक्षिणहस्तस्थकोणघातेन वादयेत् ।
टेङ्कारः पाटवर्णः स्यान्निश्शङ्केनेति कीर्तितम् । ॥ ५७० ॥

**इति ढक्कावाद्यलक्षणम् ॥**

**तत्रैव डक्कावाद्यलक्षणम्[1] :—**

वितस्तिमात्रदीर्घः स्यान्मध्यः किञ्चित्कृतो भवेत् ।
मुखन्त्वष्टाङ्गुलं पिण्डो व्यङ्गुलस्तन्त्रिकाद्वयम् ॥ ५७१ ॥

मुखे मुखे शङ्कवश्च चत्वारस्ताम्रनिर्मिताः ।
तेषामधो द्वौ पिण्डौ च तन्त्रीबन्धनसिद्धये ॥ ५७२ ॥

तन्त्री त्रीणि (?) शलाकाश्च निदध्याद्ध्वनिपुष्टये ।
अन्यल्लक्ष्म हुडुक्कावत् यस्याः पाटाक्षराण्यपि ॥ ५७३ ॥

द्वादशाङ्गुलदैर्घ्येण कुडुपेन तु वादनम् ।
निःशङ्कशार्ङ्गदेवेन डक्का सा परिकीर्तिता ॥ ५७४ ॥

अन्येऽस्या वादनं प्राहुः करेण कुडुपेन तु ।
घटस्तथोडगश्चेति मुख्यपाटान्वदन्त्यमी ॥ ५७५ ॥

निर्गो कखरटा वर्णा मुख्याः प्रोक्तापरैरिह ।
अस्याश्च सूरयः प्राहुर्देवतां विन्ध्यवासिनीम् ॥ ५७६ ॥

अङ्गुलोना मध्यमा सा द्व्यङ्गुलोना कनीयसी ।

**अथ मतङ्गमते :—**

रक्तचन्दनखर्जूरैर्द्वादशाङ्गुलविस्तृतम् ॥ ५७७ ॥

---

[1] अयं भागः मातृकायां मतान्तरमिति भ्रमवशाद् दर्शितः ।
किन्तु रत्नाकरमूलग्रन्थपाठापेक्षया किञ्चिन्मात्रं भिन्नः । (सङ्गीतरत्नाकरः, वाद्याध्यायः, श्लो. ११९३—११९९, पृ. ४७८)

अष्टाङ्गुलमितन्तद्वद्दास्ययोरायतं महत् ।
रन्ध्राष्टकेन सम्बध्वा रज्जुतन्तुकृतेन च ॥ ५७८ ॥

मेषाण्डचर्मणा बद्धा अस्य देवश्चतुर्मुखः ।
झं झं झनरन झर्धि झङ्कारेषु प्रयोजयेत् ॥ ५७९ ॥

मध्येऽर्धाङ्गुलमाने तु वामहस्तेनं धारयेत् ।
सूचीमुखेन हस्तेन दक्षिणेन च वादयेत् ॥ ५८० ॥

सूचीदीर्घविहीने तु मात्रादण्डेन वादयेत् ।
तन्मध्यमाविशिष्टं स्याड्ढक्का वाद्यस्य लक्षणम् ॥ ५८१ ॥

इति डक्कालक्षणम् ॥

**मतङ्गमतेन ढाक्किकलक्षणं लक्ष्यते :—**

तालश्रुतिविशेषज्ञो रूपयौवनसंयुतः ।
सर्वज्ञो गीतवेदी च मन्द्रादिषु विशारदः ॥ ५८२ ॥

तालमुक्तादिकालेषु यथावन्मद्रकादिषु ।
नियोजनेषु चतुरः मर्मज्ञो लघुहस्तकः ॥ ५८३ ॥

पाटाक्षरविशेषज्ञः जातिमात्रात्मकेन च ।
एवंविधगुणोपेतो ढक्कावाद्यस्य वादकः ॥ ५८४ ॥

इति ढाक्किकलक्षणम् ॥

**अथ क्रमप्राप्तं रत्नाकरोक्तं कुडुकावाद्यलक्षणमुच्यते :—**

हुडुक्कैवार्गलाहीना कुडुक्का किन्तु वादनम् ।
अस्याः करेण कोणेन क्षेत्रपालस्तु देवता ॥ ५८५ ॥

### रत्नाकरोक्तं कुडुवावाद्यलक्षणं निगद्यते :—

बीजदारुमयी सप्ताङ्गुलगर्भमुखद्वयम् ।
एकविंशत्यङ्गुला च यस्या दैर्घ्ये समाकृतिः ॥ ५८६ ॥

संहृताग्नित्रयाकारस्त्र्यङ्गुलस्थूलतायुते ।
वृत्ते नवाङ्गुले गर्भे वलये वल्लिनिर्मिते ॥ ५८७ ॥

सप्तसप्तछिद्रयुते यस्याः स्यातां मुखद्वये ।
कवलाभ्यां पिनह्येते मुखे च वलयान्विते ॥ ५८८ ॥

सरन्ध्रे कवले न्यस्ततन्त्री सुयन्त्रिते ।
कुडुवा सा हुडुक्कोक्तवर्णा हुङ्कारभूयसी ॥ ५८९ ॥

कोणाभ्यां मदनाक्ताभ्यां वाद्यते त्यक्तझेङ्कृतिः ।

### इति कुडुवालक्षणम् ॥

### अथ रत्नाकरोक्तं रुञ्जावाद्यस्वरूपं निरूप्यते :—

अष्टादशाङ्गुला दैर्घ्ये दृढा रुञ्जा समाकृतिः ॥ ५९० ॥

एकादशाङ्गुले तस्या वदने कुण्डलीयुते ।
नद्धव्ये चर्मणा वामवक्त्रान्तःकुण्डलीद्वयम् ॥ ५९१ ॥

तत्रैका वक्त्रमात्रा स्यादपरा चतुरङ्गुला ।
कुण्डल्योरन्तराले स्यान्नलिका स्नायुनिर्मिता ॥ ५९२ ॥

सैकच्छिद्रं वामवक्त्रं सूत्रतन्त्वञ्चनीयुतम् ।
पूर्ववद्ग्रन्थिकाः कार्या वक्त्रयोः सप्त सप्त च ॥ ५९३ ॥

पादोनहस्तमात्राञ्च नागपाशेन तां दृढाम् ।
कच्छां स्कन्धे निवेश्यास्या वादनं वेदितं बुधैः ॥ ५९४ ॥

रुङ्कारजननाद्रुञ्जा सा भवेद्भृङ्गिदेवता ।
मतङ्गोक्तास्त्विमे वर्णाः कतदा वनमा रवौ ॥ ५९५ ॥

उक्तास्त्वन्यैरिमे वर्णाः करगा घटना खहौ ।
विघ्निका वाद्यशास्त्रेऽस्मिन् कर्पराः परिकीर्तिताः ॥ ५९६ ॥

इति रुञ्जालक्षणम् ॥

**अथ रत्नाकरोक्तं डमरुकवाद्यं निरूप्यते :—**

वितस्तिमात्रदैर्घ्यः स्यादष्टाङ्गुलमुखद्वयः ।
यो यस्य मण्डलीयुक्ते मुखे बद्धे च चर्मणा ॥ ५९७ ॥

त्रिवलीवत् क्षाममध्यो निबद्धस्तत्र दोरकैः ।
मध्ये च गाढतां नीतावञ्चन्यौ वादनाय च ॥ ५९८ ॥

भवेतां प्रान्तसंलग्नसम्यङ्मदनगोलकैः ।
असौ डमरुको मध्ये धृत्वा हस्तद्वयेन च ॥ ५९९ ॥

डघवर्णो वादनीयः प्रोक्तो निःशङ्कसूरिणा ।
अन्यैः खडरथा वर्णाः प्रोक्ता डमरुकेऽधिकाः ॥ ६०० ॥

इति डमरुकलक्षणम् ॥

**अथ रत्नाकरोक्तं मड्डिढक्का[1]वाद्यलक्षणं लक्ष्यते :—**

ढक्कैव मड्डिढक्का स्यात् किन्त्वस्याः षोडशाङ्गुलम् ।
दैर्घ्यमष्टाङ्गुलौ गर्भौ स्यातां वदनयोर्द्वयोः ॥ ६०१ ॥

---

1 'माण्डिडक्का' इति रत्नाकरमूलग्रन्थपाठः ।

षोडशाङ्गुलको मध्यः परिधिर्नात्र चार्गला ।
न च कच्छोत्कच्छकस्तु मध्ये स्यादञ्चनीद्वयम् ॥ ६०२ ॥

उत्कक्षञ्चाञ्चनीद्वंद्वं वामाङ्गुष्ठाङ्गुलित्रयात् ।
धृत्वा सम्पीड्य तर्जन्या मण्डलीप्रान्तमाननम् ॥ ६०३ ॥

अस्या दक्षिणजानुस्थं हन्याद्दक्षिणपाणिना ।
उत्कक्षं मणिबन्धोर्ध्वे यद्वान्यस्याञ्चनीद्वयम् ॥ ६०४ ॥

कनिष्ठानामिकाङ्गुष्ठैः संयुज्यापीड्य मण्डलीम् ।
तर्जन्या मध्यया वाथ हस्तेनान्येन वादयेत् ॥ ६०५ ॥

वदन्ति वादनं तस्या करेण कुड्डपेन वा ।
चर्यागाने च पूजायां शक्तेः सा विनियुज्यते ॥ ६०६ ॥

## इति मड्डिढक्कालक्षणम् ॥

### अथ रत्नाकरोक्तं ढक्कली[1]वाद्यलक्षणं लक्ष्यते :—

कांस्याद्रौश्शृङ्गतो दन्तिदन्ताद्वा ढक्कली भवेत् ।
दैर्घ्यं पञ्चाङ्गुलं वक्त्रे तस्याश्च चतुरङ्गुले ॥ ६०७ ॥

मेषपार्युद्धलीबद्धे स्वस्वचक्रसमन्विते ।
चक्रे च कांस्यजे ताम्रमये वा लोहजे पृथक् ॥ ६०८ ॥

पञ्चरन्ध्रे तथोद्धल्यौ रन्ध्रविन्यस्तदोरकैः ।
सौत्रैर्गाढं निबद्ध्येत मध्ये सूत्रेण वेष्टितम् ॥ ६०९ ॥

---

[1] 'डक्कुली' इति रत्नाकरमूलग्रन्थपाठः ।

नातिश्लथं नातिगाढं मध्यं सूत्रेत्वनामिकाम् ।
निधाय मध्यतर्जन्यौ विवृते चक्रसंयुते || ६१० ||

कृत्वाङ्गुष्ठन्त्वन्यवक्त्रे न्यस्याथ मदनान्विताम् ।
विधायाञ्चनिकामेकां तां दुंदुमिति वादयेत् || ६११ ||

चुमूमित्यपरे प्राहुः पाटा मर्दलसम्भवाः ।
यथासम्भवमेतस्यां शार्ङ्गदेवेन कीर्तिताः || ६१२ ||

**इति रत्नाकरोक्तं ढक्कलीवाद्यलक्षणम् ॥**

**अथ रत्नाकरोक्तं सेल्लुकावाद्यलक्षणं लक्ष्यते :—**

षट्त्रिंशदङ्गुला दैर्घ्ये परिधौ त्रिंशदङ्गुला ।
समकाया सेल्लुका स्याद्बीजकाष्ठेन निर्मिता || ६१३ ||

दशाङ्गुले मुखे तस्याः परैस्त्वेकादशाङ्गुले ।
उक्ते तद्बन्धनोद्धल्यौ ताभ्यामेकाङ्गुलान्तरे || ६१४ ||

वल्लीजं तर्जनीस्थौल्यं मुखयोर्वलयद्वयम् ।
सरन्ध्रषट्कं रन्ध्रस्थरज्जुभिर्गाढयन्त्रितम् || ६१५ ||

एकाङ्गुलाधिकं तच्च वक्त्राभ्यां वदनं पुनः ।
तन्त्रिकागर्भितं वामं वामहस्तेन वादयेत् || ६१६ ||

मुखं दक्षिणपाणिस्थकुडुपेन तु दक्षिणम् ।
मुखे वामे तु झङ्कारो घिङ्कारो दक्षिणे मुखे || ६१७ ||

**इति सेल्लुकावाद्यलक्षणम् ॥**

अथ रत्नाकरोक्तं झल्लरीवाद्यलक्षणं लक्ष्यते :—

सैव स्यात्पञ्चविंशत्या दैर्घ्ये तु द्वादशाङ्गुला ।
अष्टादशाङ्गुलमिता परिधौ समविग्रहा ॥ ६१८ ॥

ससूत्रकटकं रन्ध्रद्वयं कण्ठे च बिभ्रती ।
चर्मणा नद्धवदना झल्लरी परिकीर्तिता ॥ ६१९ ॥

वामहस्तधृता सा च वाद्या दक्षिणपाणिना ।

इति झल्लरीवाद्यलक्षणम् ॥

अथ रत्नाकरोक्तं भाणवाद्यलक्षणम् :—

स्यात्तदर्धपलो भाणः परिधौ द्वादशाङ्गुलः ॥ ६२० ॥

अन्यत्तु झल्लरीलक्ष्म तस्य श्रीशार्ङ्गिणोदितम् ।

इति भाणवाद्यलक्षणम् ॥

अथ रत्नाकरोक्तं त्रिवलीवाद्यलक्षणं कथ्यते :—

सप्ताङ्गुलं मुखद्वन्द्वं त्रिवली हस्तदैर्घ्यभाक् ॥ ६२१ ॥

मुष्टिग्राह्यश्च मध्यः स्याद्वदने कवलावृता ।
कवले लोहमण्डल्यौ सप्तरन्ध्रे पृथक् पृथक् ॥ ६२२ ॥

रन्ध्रन्यस्तैर्गुणैर्बद्धे मध्ये गाढं च वेष्टनम् ।
सूत्ररज्वा हस्तमात्रा कच्छा स्कन्धावलम्बिनी ॥ ६२३ ॥

वादनं करयुग्मेन शार्ङ्गदेवेन कीर्तितम् ।
तिं दों दों देति विस्तीर्णा त्रिपुरारिस्तु देवता ॥ ६२४ ॥

एकादशाङ्गुलमुखी विंशत्यङ्गुलदैर्घ्यभाक् ।
मुखार्धमानमध्या स्यान्मध्ये चाङ्गनिकायुता ॥ ६२५ ॥

तदर्धवर्णसंयुक्ता त्रिकुल्या चोच्यते परैः ।

इति त्रिवलीलक्षणम् ॥

**अथ रत्नाकरोक्तं दुन्दुभिवाद्यलक्षणं लक्ष्यते :—**

आम्रद्रुमसमुद्भूतो महागात्रो महाध्वनिः ॥ ६२६ ॥

कांस्यभाजनसम्भारगर्भो वलयवर्जितः ।
चर्मबद्धाननो बद्धो वध्रैर्गाढं समन्ततः ॥ ६२७ ॥

दृढचार्मेण कोणेन वाद्यो वर्णेन दुन्दुभिः ।
मेघनिर्घोषगम्भीरघोङ्कारस्यात्र मुख्यता ॥ ६२८ ॥

मङ्गले विजये चैव वाद्यते देवतालये ।

इति दुन्दुभिलक्षणम् ॥

**अथ रत्नाकरोक्तं भेरीलक्षणं निगद्यते :—**

वितस्तित्रयदैर्घ्या स्याद्भेरी ताम्रेण निर्मिता ॥ ६२९ ॥

चतुर्विंशत्यङ्गुले च वदने वलयान्विते ।
तस्याः सवलये चर्मनद्धे छिद्रसमाश्रिते ॥ ६३० ॥

रज्वा नियन्त्रिता गाढं मध्ये सूत्रेण बन्धनम् ।
दक्षिणस्थेन कोणेन वामहस्तेन ताडनात् ॥ ६३१ ॥

उद्भटो भवति ध्वानो गम्भीरोऽरिभयङ्करः ।
तङ्कारः पाटवर्णोऽस्या मुख्यो निःशङ्ककीर्तितः ॥ ६३२ ॥

इति भेरीलक्षणम् ॥

अथ रत्नाकरोक्तं निस्साणवाद्यलक्षणं निगद्यते :—

कांस्यजस्ताम्रजो लौहो वोत्तमो मध्यमोऽधमः ।
एकवक्त्रो महान् वक्त्रे स्वल्पोऽधोऽर्धयवाकृतिः ॥ ६३३ ॥

भृतगर्भः कांस्यपात्रभारैः महिषचर्मणा ।
छन्नाननो बद्धचर्मा तद्रन्ध्रन्यस्तवध्रकैः ॥ ६३४ ॥

क्षिप्तोऽधोवलये नीतः निवेश्यावर्तितो मुहुः ।[1]
द्विपद्वित्रासजनको निस्साणः शार्ङ्गिणोदितः ॥ ६३५ ॥

चर्मणानद्धकोणेन सद्भितीनस्य वादनम् ।
दृढशब्देन भीरूणां भिनत्ति हृदयान्ययम् ॥ ६३६ ॥

स्यादसाद्युद्धवीराणां रोमाञ्चोपचितं वपुः ।

इति निस्साणलक्षणम् ॥

अथ तम्बटः[2] :—

निस्साणवत्तम्बटः स्यात्ततोऽल्पा गात्रनादयोः ॥ ६३७ ॥

इति तम्बटवाद्यलक्षणम् ॥

---

[1] 'क्षिप्तोऽधो वध्रवलये निवेश्यावर्तितैर्मुहुः' इति रत्नाकरमूलग्रन्थपाठः ।
[2] रत्नाकरमूलग्रन्थे वाद्यमिदं 'तुम्बकी'ति व्यवहृतम् ।

## मतान्तरे डोलुलक्षणम्[1] :—

कुम्भकर्णस्य बोधार्थं रावणेन विनिर्मितम् ।
षोडशाङ्गुलविस्तीर्णं प्रादेशद्वयमायतम् ॥ ६३८ ॥

डोलावाद्यगतञ्चेति प्रमाणं परिकीर्तितम् ।
डोकारो दैत्यदेवानां लुकारो रावणेश्वरः ॥ ६३९ ॥

द्वौ द्वौ राक्षसदेवानां डोलावाद्यं प्रयुज्यते ।
गदमूले ब्रह्मा गदमध्ये हरिस्तथा ॥ ६४० ॥

गदाग्रेच भवेद्रुद्रो गदे तिष्ठन्ति देवताः ।

### इति मतान्तरोक्तं डोलुवाद्यलक्षणम् ॥

## अथ रत्नाकरोक्ता वाद्यगुणदोषाः :—

रक्तं विरक्तं मधुरं समं शुद्धं कलं घनम् ॥ ६४१ ॥

स्फुटप्रहारः सुकरं विघट्टश्च गुणैरिति ।
दशभिः संयुतं वाद्यमुक्तं सोढलसूनुना ॥ ६४२ ॥

अन्वर्थान्यत्र नामानि समन्त्वष्टविधं मतम् ।
अक्षराद्यङ्गपूर्वञ्च तालादि यतिपूर्वकम् ॥ ६४३ ॥

लयादि न्यासविन्यास[2]पूर्वं पाणिसमं तथा ।
स्यादक्षरसमं गीतगुरुलघ्वक्षरान्वितम् । ॥ ६४४ ॥

---

[1] भागोऽयं बेङ्गेरिमूलमातृकेन अष्टावधानसोमनार्यविरचितस्वररागसुधा-रसेनोद्धृतः इति विज्ञायते । (पृ.१५०)

[2] 'अपन्यास' इति रत्नाकरमूलग्रन्थपाठः ।

गीतस्य ग्रहमोक्षादीन्यङ्गान्यन्वेति यत्पुनः ।
स्यात्तदङ्गसमं तालाङ्गं तालसमं मतम् ॥ ६४५ ॥

यतेर्लयस्य न्यासस्य विन्यासस्य च साम्यतः ।
यत्यादिपूर्वकं ज्ञेयं क्रमात्समचतुष्टयम् ॥ ६४६ ॥

गीतिग्रहैः पाणिसंज्ञैः समं पाणिसमं मतम् ।
वाद्यस्यैते गुणाः प्रोक्ता दोषः स्यात्तद्विपर्ययः ॥ ६४७ ॥

इति रत्नाकरोक्ता वाद्यगुणदोषाः ॥

अथ रत्नाकरोक्तं वादकगुणदोषस्वरूपं निरूप्यते :—

हस्तकोणप्रहारज्ञो गीतवादनकोविदः ।
यतितालयाभिज्ञः पाटज्ञः पञ्चसञ्चवित् ॥ ६४८ ॥

दशहस्तगुणोपेतः पात्राभिप्रेतवादकः ।
आतोद्यध्वनितत्वज्ञः समादिग्रहवेदिता ॥ ६४९ ॥

गीतवादननृत्यस्थच्छिद्रच्छादनपण्डितः ।
ग्रहमोक्षप्रभेदज्ञो गीतनृत्तप्रमाणवित् ॥ ६५० ॥

वाद्ये समस्तभेदज्ञो रूपरेखाञ्चितस्तथा ।
उद्धट्टनपटुः सर्ववाद्यभेदविवेचकः ॥ ६५१ ॥

नादवृद्धिक्षयाभिज्ञः प्रवीरो पादकोविदः ।
गुणैः कतिपयैर्हीनः सर्वैर्वा वादकोऽधमः ॥ ६५२ ॥

इति वादकगुणदोषाः ॥

---

[1] 'अपन्यास' इति रत्नाकरमूलग्रन्थपाठः ।

अथ वादकहस्तगुणाः कथ्यन्ते :—

वाञ्छानुगौ दृढौ व्यक्तौ स्निग्धौ दृढनखौ लघू ।
विश्रेयाङ्गुलिसञ्चारौ स्वेदहीनौ जितश्रमौ ॥ ६५३ ॥

युक्तप्रहारौ च करौ प्रोक्तौ दशगुणाविति ।

इति रत्नाकरोक्ता वादकहस्तगुणाः ॥

इति रत्नाकरोक्तं सकलावनद्धवाद्यलक्षणं समाप्तम् ॥

अथ भारतीयोक्तमानद्धवाद्यस्वरूपं निरूप्यते :—

तत्रावनद्धं वक्ष्यामि विधिं स्वरसमुद्भवम् ॥ ६५४ ॥

नानाकरणसंयुक्तं मार्गतालविभूषितम् ।
यावन्ति चर्मनद्धानि ह्यातोद्यानि विभागतः ॥ ६५५ ॥

तानि त्रिपुष्कराद्यानि ह्यवनद्धमिति स्मृतम् ।
एतेषान्तु पुनर्भेदाः शतसङ्ख्याः प्रकीर्तिताः ॥ ६५६ ॥

किन्तु त्रिपुष्करस्यात्र लक्षणं प्रोच्यते मया ।
शेषाणां कर्मबाहुल्यं यस्मादस्मिन्न दृश्यते ॥ ६५७ ॥

न स्वरा न प्रहाराश्च नाक्षराणि न मार्जनाः ।
केवलं तत्र गाम्भीर्यमातोद्येषूपपद्यते[1] ॥ ६५८ ॥

भेरीपटहभाण्डास्तु तथा दुन्दुभिडिण्डिमे ।
शैथिल्यादायतत्वाद्वा स्वरगाम्भीर्यमानयेत् ॥ ६५९ ॥

---

[1] अयं श्लोकार्धः भारतीयमूलग्रन्थे न दृश्यते ।

न च तानि प्रयोज्यानि काले कार्यं समीक्ष्य तु ।
तस्मात्त्रिपुष्करस्यास्य श्रूयतां यो विधिः स्मृतः ॥ ६६० ॥

वाय्वात्मको भवेच्छब्दः स चापि द्विविधः स्मृतः ।
स्वनवांश्चैव विज्ञेयस्तथा चेवाभिधानवान् ॥ ६६१ ॥

तत्राभिधानवान्नाम नामभाषान्तरश्रितः ।
स्वनवानपि विज्ञेयो नानाऽनोद्यसमाश्रयः ॥ ६६२ ॥

द्वौ तु भेदौ समासाद्य सर्ववाद्यविभागतः ।[1]
शालीयांश्चैव वीणायां ये स्वराः सप्त कीर्तिताः ॥ ६६३ ॥

तस्या विनिःसृता यान्ति आतोद्यादि द्विजोत्तमाः ।
पूर्वं शरीराद्भूताः ततः सयान्ति दारवीम् ॥ ६६४ ॥

स्वरं पुष्करजं पश्चादनुयान्ति ध्वनिङ्गता ।
एतेषां करणे ज्ञेयाः प्रहारा वदनाश्रयाः ॥ ६६५ ॥

श्रृणु जगति यद्युक्ता वीणावाद्यप्रयोगिणः ।
शारीर्यामथ वीणायां झेण्णुं जगति चेति च ॥ ६६६ ॥

भवेद्वाक्करणं विप्रा नानाकरणसंयुतम् ।
यं यं गाता स्वरं गच्छेत्तमाद्ये प्रयोजयेत् ॥ ६६७ ॥

यतिपाणिसमायुक्तं गुरुलघ्वक्षरान्वितम् ।
पौष्करस्य च वाद्यस्य मृदङ्गपणवाश्रयम् ॥ ६६८ ॥

विधानं सम्प्रवक्ष्यामि दर्दुरस्य तथैव च ।
षोडशाक्षरसम्पन्नं चतुर्मार्गं तथैव च । ॥ ६६९ ॥

---

[1] अयं श्लोकार्धः भारतीयमूलग्रन्थे न दृश्यते ।

विलेपनं पट्करणं त्रियतिं त्रिलयं तथा ।
त्रिगतिं त्रिप्रचारञ्च त्रिसंयोगं त्रिपाणिकम् ॥ ६७० ॥

दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् ।
विंशत्यलङ्कारञ्च तथाऽष्टादशजातिकम् ॥ ६७१ ॥

एवमेतैस्तु सम्पन्नं वाद्यं पुष्करजं भवेत् ।

**वाक्यम्** :—

१. तत्र षोडशाक्षरमिति यदुक्तं तदनुव्याख्यास्यामः ।
तद्यथा :—

क ख ग घ ट ठ ड ढ त थ द ध य र ल ह इति षोडशाक्षराणि च पुष्करवाद्ये तद्ज्ञै वाक्करणे संविधेयानि ।

२. चतुर्मार्गं नाम : आलिप्तः, अञ्चितः, गोमुखः, विस्तारश्चेति ।

३. विलेपनं नाम : वामः, ऊर्ध्वगः, प्रलेपश्चेति ।

४. पट्करणं नाम : रूपम्, कृतप्रतिकृतम्, प्रतिभेदः, रूपशेषम्, ओघः, प्रतिशुष्का चेति ।

५. त्रियतिर्नाम : समा, स्रोतोवहा, गोपुच्छा चेति ।

६. त्रिलयं नाम : द्रुतः, मध्यः, विलम्बितश्चेति ।

७. त्रिप्रचारो नाम : समप्रचारः, विषमप्रचारः, समविषमप्रचारश्चेति ।

८. त्रिपाणिकं नाम : समपाणिः, अवपाणिः, उपरिपाणिश्चेति ।

९. त्रिसंयोगं नाम : गुरुसंयोगः, लघुसंयोगः, गुरुलघुसंयोगश्चेति ।

१०. त्रिगतिर्नाम : तत्वम्, अनुगतम्, ओघश्चेति ।

११. पञ्चप्रहतं नाम : समपाणिः, अर्धसमपाणिः अर्धार्धसमपाणिः पार्श्वपाणिः, प्रदेशिनी चेति ।

१२. त्रिप्रहारं नाम : निगृहीतः, अर्धनिगृहीतः, मुक्तश्चेति ।

१३. त्रिमार्जनं नाम : मायूरी, अर्धमायूरी, कार्मारवी चेति ।

विंशतिप्रकारानलङ्कारानष्टादशजातीः पदभेदांश्च वर्णयिष्यामः । एतावत्सूत्रम् । अतः पदविधः । तत्र षोडशाक्षराणि नाम पूर्वं अभिव्यञ्जितानि ॥

तान्यक्षराणि जानीयात्पुष्करेषु यथाविधि ।
पणवे दर्दुरे चैव मृदङ्गेषु तथैव च ॥ ६७२ ॥

कखतथटठाः दक्षिणमुखजा सधमहश्चेतीह वामे स्युः ।

गदकारा ऊर्ध्वगतौ धणपमाश्चेति चालिङ्ग्ये ॥

**एतेषामक्षराणां स्वरसंयोगव्यञ्जनसंयोगप्रपञ्चो भारतीये द्रष्टव्यः ॥ चतुर्मार्गमिति यदुक्तं तदनुव्याख्यास्यामः :—**

अङ्कितालिप्तमार्गौ तु वितस्तो गोमुखस्तथा ।
मार्गाश्चत्वार एवैते प्रहारकरणाश्रयाः ॥ ६७३ ॥

**इत्युद्देशः ॥**

तत्र एकाङ्गमृदङ्गप्रहारयुक्तस्त्वङ्कितो मार्गः ।
वामोर्ध्वेदप्रहारयुक्तस्त्वालिप्तमार्गः स्यात् ॥ ६७४ ॥

ऊर्ध्वमुखो दक्षिणमुखाक्षिप्तप्रहतो वितस्तमार्गः ।
आलिङ्ग्यकरणबहुलः सर्वपुष्करप्रहतो गोमुखमार्गः ॥ ६७५ ॥

लक्ष्यन्त्वत्र नोक्तम् ॥

इति चतुर्मार्गलक्षणम् ॥

अथ त्रिप्रचारलक्षणम् :—

समप्रचारो विषमप्रचारः समविषमप्रचार इति ।
वामोर्ध्वगयोर्मार्गः सर्वो वै दक्षिणेऽङ्केऽपि ॥ ६७६ ॥

कार्यः समप्रचारस्त्वालिप्ते वाद्यकरणे तु ।
वामोर्ध्वगसव्यानां प्रहतो वामस्तु कर्तव्यः ॥ ६७७ ॥

सर्वोर्ध्वगवामानां सव्यो विषमप्रचारे तु ।
एवं स्वस्तिकयोगात् द्वाभ्यामपि यद्भवेत्तु हस्ताभ्याम् ॥ ६७८ ॥

मार्गे वितस्तसंज्ञे प्रहते विषमप्रचारः सः ।
स्वच्छन्दकस्तु करयोः शेषः प्रहतेषु मार्गकरणेषु ॥ ६७९ ॥

अङ्कितगोमुखयोगात् समविषमो हस्तसञ्चारः ।
शृङ्गारहास्ययोगे वाद्यं योज्यं तथाङ्किते मार्गे ॥ ६८० ॥

वीराद्भुतरौद्राणां वितस्तमार्गेण वाद्यन्ते ।
करुणरसेऽपि च कार्यं वाद्यञ्चालिप्तमार्गकरणेषु ॥ ६८१ ॥

बीभत्सभयानकयोः तथैव नित्यं गोमुखो मुख्यः ।
रसतत्वभावयोगात् दृष्ट्वाऽभिनयं गतिप्रचारञ्च ॥ ६८२ ॥

वाद्यं नित्यं कार्यं यथाक्रमं स्थानसंयोगात् ।
एतत्प्रहतविधानं कार्यं मार्गाश्रितैः रसैः सम्यक् ॥ ६८३ ॥

इति त्रिप्रचारप्रपञ्चः ॥

अथ दर्दुरपणववाद्यलक्षणम् :—

वक्ष्याम्यतश्च भूयो दर्दुरपणवाश्रितं वाद्यम् ।
अतिवादितमनुवादितसमवादितमुच्यते पणववाद्यम् ॥ ६८४ ॥

तत्रातिवादितं स्यान्मुखाणामग्रतो यत्र ।
यस्त्वनुगतं मृदङ्गैरनुवादितमुच्यते तु तद्वाद्यम् ॥ ६८५ ॥

समवादितं मृदङ्गैर्ज्ञेयं साम्येन तद्वाद्यम् ।

इति दर्दुरपणववाद्यलणक्षम् । लक्ष्यन्तु विस्तरभिया नोक्तम् ॥

अथ षट्करणलक्षणं लक्ष्यते । आदावुद्देशः :—

रूपं कृतप्रतिकृतं प्रतिभेदो रूपशेषमोघश्च ॥ ६८६ ॥

षष्ठी वै प्रतिशुष्का ह्येवं ज्ञेयं करणजातम् ।

तत्र रूपं नाम विभक्तहस्तेन करणम् । कृतप्रतिकृतं नाम यत्रैकं करणं त्रिपुष्करमप्युद्भावयति । प्रतिभेदो नाम युगपत्कृते करणे मृदङ्गानां यदुपरिकरणेन गच्छति । रूपशेषं नाम विरामकृतम् । प्रतिशुष्का नाम अनुस्वारो मार्दङ्गिकपाणविके दार्दुरिकाणाम् । ओघो नाम चतुष्काख्ये सर्वभाण्डविरामे द्रुतताललययोगाद्यो घोषः ॥

करणानां समायोगः षड्विधः स समुदाहृतः ॥ ६८७ ॥

अनेनैव विधानेन ज्ञेयं वाद्यकरणं बुधैः ।

इति पद्धकरणानि ॥

त्रियतिनाम—समा स्रोतोवहा गोपुच्छा चेति ।

**त्रिलययतिपाणिसंयोगः** —तत्र संयोगः राद्धं, विद्धं, शय्यागत-
श्चेति त्रिविधः ।

त्रिप्रकारस्तु संयोगः करणेषु विधीयते । ॥ ६८८ ॥

अवपाणिस्तु यत्र स्यात्तथा चैव स्थितो लयः ।
गोपुच्छा च यतिर्वाद्यं तद्धै शय्यगतं भवेत् ॥ ६८९ ॥

तथा च गीतिप्राधान्यं मार्गश्चैवात्र दक्षिणः ।
अत्युत्तमेषु पात्रेषु वाद्यं शय्यागतं भवेत् ॥ ६९० ॥

स्रोतोवहा यतिर्यत्र लयोमध्यस्तथैव च ।
समपाणिस्तथा चैव विद्धं वाद्यन्तु तद्भवेत् ॥ ६९१ ॥

वार्तिको वृत्तिमार्गः स्यात्प्राधान्यं गीतवाद्ययोः ।
पात्रेपूत्तममध्येषु विद्धं वाद्यमुदाहृतम् ॥ ६९२ ॥

तथा वाद्यप्रधानश्चोपरिपाणिः समा यतिः ।
द्रुतश्चापि लयो यत्र राद्धं वाद्यं तु तद्भवेत् ॥ ६९३ ॥

स्थिताल्लयात्प्रभृत्येषां प्रमाणं सम्प्रवर्तते ।
कार्यहानिः कलानान्तु शेषेष्वन्येषु पाणिषु ॥ ६९४ ॥

यतयः पाणयश्चैव लयाश्चेद्वाद्यसंश्रयाः ।
यथाक्रमं हि कर्तव्यं नाट्ययुक्तिमपेक्ष्य च ॥ ६९५ ॥

## अथ मार्जनस्वरूपकथनम् :—

मायूरी ह्यर्धमायूरी तथा कार्मारवी पुनः ।
तिस्रस्तु मार्जना ज्ञेया पुष्करेषु स्वराश्रयाः ॥ ६९६ ॥

गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे ।
ऊर्ध्वगे मध्यमश्चैव मयूर्यश्च स्वराश्रयाः ॥ ६९७ ॥

वामके पुष्करे षड्जः ऋषभो दक्षिणे तथा ।
धैवतश्चोर्ध्वगे कार्यः अर्धमायूरिकाश्रयाः ॥ ६९८ ॥

ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वगे कार्यः कार्मारव्यः स्वराश्रयाः ॥ ६९९ ॥

एतेषामनुवादीतु जातिरागस्वरान्विताः ।
आलिङ्ग्ये मार्जनं प्राप्य निषादस्तु विधीयते ॥ ७०० ॥

मायूरी मध्यमग्रामे अर्धा षड्जे तथैव च ।
कार्मारवी च कर्तव्या साधारणसमाश्रया ॥ ७०१ ॥

स्वरा ये स्थायिनो यत्र श्रुतिसाधारणाश्रयाः ।
त एवं मार्जनं कृत्वा शेषाः सञ्चारिणः स्मृताः ॥ ७०२ ॥

वामोर्ध्वगाभ्यामाहार्याः कार्या वैलेपनाः स्वराः ।
शैथिल्यादायतत्वाच्च कार्यास्त्वालिङ्ग्यकाङ्क्षिके ॥ ७०३ ॥

शैथिल्यमायतत्वञ्च वध्राविन्धनमार्दवात् ।
एवं स्वरोद्भवः कार्यो मार्जनासु प्रयोक्तृभिः ॥ ७०४ ॥

मार्जना तु मृदा कार्या वामकोर्ध्वगयोस्तथा ।

**इति मार्जनलक्षणम् ॥**

**त्रिसंयोगं नाम :—**

त्रिसंयोगस्य वक्ष्यामि लक्षणं द्विजसत्तमाः ॥ ७०५ ॥

गुरुसंयोगो लघुसंयोगो गुरुलघुसंयोगश्चेति ।

तत्र गुरुसंयोगो नाम : गुरुस्त्रिलघुप्रवृत्तम् ;

लघुसंयोगो नाम : लघुद्वितयप्रवृत्तम् ;

गुरुलघुसंयोगलक्षणं मूलग्रन्थ एव पतितम् ; तस्मादत्र न लिखितम् ।

इति संयोगा ज्ञेया मृदङ्गवाद्ये प्रयोगज्ञैः ।

**इति त्रिसंयोगलक्षणम् ॥**

**त्रिगतिर्नाम**

—तत्वमनुगतमोघश्चेति ।

अक्षरसदृशं वाद्यं स्फुटपदवर्णं तदेववृत्तसमम् ॥ ७०६ ॥

सुविभक्तकरणयुक्तं तत्वे वाद्यं विधातव्यम् ।

समपाण्यवपाणियुतं स्फुटप्रहारकरणानुगञ्चैव ॥ ७०७ ॥

गेयस्य च वाद्यस्य च भवेदवघातो यत्तदनुगतम् ।

नैककरणाश्रयगतं ह्युपर्युपरिपाणिकं द्रुतलयञ्च ॥ ७०८ ॥

आविद्धकरणबहुलं वाद्यं योज्यं बुधैरोघे ।

**अथ साम्य प्रभेदाः :—**

सर्वस्यैव तु वाद्यस्य अष्टौ साम्यानि भवन्ति ॥ ७०९ ॥

अक्षरसमं तालसममङ्गसमं यतिसमं लयसमञ्च ।
न्यासापन्याससमं पाणिसमञ्चेति विज्ञेयम् ॥ ७१० ॥

यद्वृत्तन्तु भवेद्गानं गुरुलघ्वक्षरान्वितम् ।
तद्वृत्तन्तु भवेद्वाद्यं तदक्षरसमं स्मृतम् ॥ ७११ ॥

इत्यक्षरसमम् ॥

यच्छरीरं भवेद्गानं कलातालप्रमाणतः ।
तत्प्रमाणन्तु यद्वाद्यं तद्वै तालसमं भवेत् ॥ ७१२ ॥

इति तालसमम् ॥

ध्रुवाणां ग्रहमोक्षेषु कलान्तरकलासु च ।
यदङ्गं क्रियते वाद्यं तदङ्गसममुच्यते ॥ ७१३ ॥

इत्यङ्गसमम् ॥

समा स्रोतोवहा वापि गोपुच्छा वा यतिर्यदा ।
तदा यद्धि भवेद्वाद्यं तद्वै यतिसमं भवेत् ॥ ७१४ ॥

इति यतिसमम् ।

स्थिते मध्ये द्रुते वापि लये गानं यथा भवेत् ।
तथा भवेत्तु यद्वाद्यं तद्वै लयसमं भवेत् ॥ ७१५ ॥

इति लयसमम् ॥

न्यासापन्यासयोगस्तु स्वराणां हि यदा भवेत् ।
वंशवीणोद्भवं वाद्यं न्यासापन्यासजं तदा ॥ ७१६ ॥

इति न्यासापन्याससमम् ॥

समपाण्यवपाण्युक्तं तथैवोपरिपाणिजम् ।
गीतानुगञ्च यद्वाद्यं स्मृतं पाणिसमन्तु तत् ॥ ७१७ ॥

इति पाणिसमम् ॥

इत्यष्टविधवाद्यलक्षणम् ॥

इतः परं अष्टादश जातिभेदा निगद्यन्ते :—

आदावुद्देशः : १. शुद्धा, २. एकरूपा, ३. देशानुरूपा, ४. देशादपेतरूपा, ५. पर्यायः, ६. विष्कम्भः, ७. पर्यस्तः, ८. आरम्भः ९. पार्ष्णिसमस्ता, १०. दुष्करकरणा, (१०.अ.) वितस्तिकृता, ११. उर्ध्वगोष्ठिका, १२. उच्छृतिका, १३. वाद्या, १४. सर्वमार्गिका, १५. अवकीर्णा, १६. अर्धावकीर्णा, १७. सम्प्लवा, १८. विधूतमिति ॥

एतासां जातीनां लक्षणान्युच्यन्ते :—

एकाक्षरं द्व्यक्षरं वा यद्वाद्यं सर्वमार्गिकम् ।
भवेत्करणयोगे तु सा शुद्धा नामतो यथा ॥ ७१८ ॥

धृंधृं भोभो धश्लामेभिर्जात्यक्षरैः समायुक्ता सा शुद्धा विज्ञेया मध्यस्त्रीणां भवेज्जातिः ।

इति शुद्धजातिः ॥ १ ॥

गोमुखी अङ्गितालिप्ता वितस्तं वाश्रिता यदा ।
वादयन्ति तथैकैकमेकरूपा हि सा यथा ॥ ७१९ ॥

द्रोङ् धोङ् दोङ् ध्रोङ् घे घे अङ्कितमार्गाक्षरैः समायुक्ता ।
सात्वेकरूपजाति नृत्ते गीते विधानतः कार्या || ७२० ||

सर्वास्वपि प्रकृतिषु संयोज्या सा स्थितावापि ।
देशं कालमवस्थां ज्ञात्वा मध्येऽपि विनियोज्या || ७२१ ||

सर्वातोद्यानि यत्रैकं करणं भावयन्ति हि ।
मृदङ्गवाद्यानुगमादेकरूपा च स्मृता || ७२२ ||

इत्येकरूपजातिः || २ ||

अङ्कितमार्गविभक्ता संभोगकृते तु भवति शृङ्गारे ।
देशानुरूपजातिः स्थितलययुक्ता च कर्तव्या || ७२३ ||

तद्धिद्धंमद्धिकिंमां एभिर्जात्यक्षरैः समायुक्ता ।
देशानुरूपजातिः शृङ्गारे चोत्तमस्त्रीणाम् || ७२४ ||

इति देशानुरूपजातिः || ३ ||

वामोर्ध्वगप्रवृत्ता ओघाक्षिप्तावकृष्टलययुक्ता ।
देशादपेतरूपा करुणरसे सा भवेज्जातिः || ७२५ ||

घेन्द्राजघ्नन्द्राजघेघेजमेभिर्जात्यक्षरैः समायुक्ता ।
देशादपेतरूपा सा कार्या वाद्ययोगेषु || ७२६ ||

इति देशादपेतरूपजातिः || ४ ||

पर्यागच्छति पूर्वं यस्मिन्वै प्रस्तुतं करणजातम् ।
त्रिविधेऽपि च लययोगे पर्यायो नाम सा जातिः || ७२७ ||

घेन्दाङ् घेन्दाङ् घूधुघेङ्प्रायो दामोऽग्रिवामहस्तसञ्चारः ।
पर्यायकृता जातिः वीराद्भुतरौद्रभावेषु ॥ ७२८ ॥

इति पर्याय जातिः ॥ ५ ॥

गुरुयुग्मं लघुयुग्मं गुरुलघुयुग्मं तथैव वाद्यं चेत् ।
ज्ञेया गतिप्रचारे विष्कम्भा नाम जातिरियम् ॥ ७२९ ॥

धिंमाघङ्घतघेङ्घटघेङ् गुधुघेङ्मद्धिद्धमत्पिद्धम् ।
विष्कम्भाख्या जातिः शृङ्गारे चोत्तमस्त्रीणाम् ॥ ७३० ॥

इति विष्कम्भजातिः ॥ ६ ॥

एकैकाक्षरयोगाद्यद्वाद्यं सर्वमार्गसंयुक्तम् ।
पर्यस्तेति च विज्ञेया सा समस्तान्विता जातिः ॥ ७३१ ॥

आकाशे रथयाने ऋषिविद्याधरभुजङ्गमादीनाम् ।
त्वरिते गतिविन्यासे सा धार्या चैव पर्यस्ता ॥ ७३२ ॥

घेन्ताङ्घेन्ताडोणामेभिर्जात्यक्षरैः समायुक्ता ।
पर्यस्ता जातिर्वै साऽधमपुरुषेषु कर्तव्या ॥ ७३३ ॥

इति पर्यस्तजातिः ॥ ७ ॥

अर्धपाणिकरणयुक्ता ह्यादौ मध्यमलयेन यत्तुल्यम् ।
आरम्भं तं विद्यादन्ते चापि श्रुतं यस्याः ॥ ७३४ ॥

मठं क्रें खुखुक्किकिणां एभिर्जात्यक्षरैः समायुक्ता ।
अधमस्त्रीणां योज्या ह्यारम्भा नाम वै जातिः ॥ ७३५ ॥

इत्यारम्भजातिः ॥ ८ ॥

ऊर्ध्वाङ्गदक्षिणमुखैः क्षिप्ता प्रहता वितस्तमार्गे तु ।
पार्ष्णिसमस्ता जातिः कार्या शृङ्गारहास्यगता || ७३६ ||

तद्धिकटद्धिकटमटद्धिकरणैः सपार्ष्णिविक्षेपैः ।
धृङ्धृङ् गुदुघेङ् ग्रथिता पार्ष्णिसमस्ता पुनर्जातिः || ७३७ ||

स्थितिगतिलयविन्यासे शृङ्गारे भवति चोत्तमप्रकृतौ ।
धीरोद्धतपुरुषाणामन्येषां दानवादीनाम् । || ७३८ ||

इति पार्ष्णिसमस्तजातिः || ९ ||

स्वस्तिकहस्तविचारा सर्वमृदङ्गप्रहारसंयुक्ता ।
सा त्रिलयवाद्ययुक्ता दुष्करकरणा नाम वै जातिः || ७३९ ||

गदगददुणदुण घिदुघेङ् रोघेङ् मटद्धिदुनःटिघेणङ् ।
एभिस्त्वक्षरयोगैर्दुष्करकरणा भवेज्जातिः || ७४० ||

दैत्येन्द्रभुजगराक्षसपिशाचगन्धर्वगुह्यकादीनाम् ।
गतिविन्यासे कार्या दुष्करकरणा भवेज्जातिः || ७४१ ||

इति दुष्करकरणजातिः || १० ||

केन्द्राकेन्द्राकीतामेभिर्जात्यक्षरैः समायुक्ता ।
राज्ञां स्वभावगमने जातिः कार्या वितस्तकृता || ७४२ ||

गोमुख्याक्षरसहिता सर्वमृदङ्गप्रहारसंयुक्ता ।
कुहकाभिनये नियोज्या वैलम्बिकदृष्टलिङ्गेषु || ७४३ ||

इति वितस्तकृतजातिः || १०. अ. ||[1]

---

[1] १०. अ. : अयञ्च जातिभेदः उद्देशे नोक्तः; किन्तु लक्षणकथनावसरे लक्ष्य-लक्षणयोः कथनात् अष्टादशसङ्ख्यापेक्षया अधिकं उपलब्धः। अत एवास्माभिः उद्देश एव सङ्ग्राहितः ||

ऊर्ध्वाङ्गदक्षिणमुखे क्षिप्तप्रहता वितस्तमार्गा च ।
अङ्क्योर्ध्वकोष्ठवृत्ता दक्षिणवामप्रवृत्ता च ॥ ७४४ ॥

प्रायेणाङ्कितमार्गाद्वितस्तमार्गाश्रया तु दिव्यानाम् ।
दि ध्रं ध्रं ध्रं प्राया जातिस्त्विह चोर्ध्वगोष्ठीस्यात् ॥ ७४५ ॥

इत्यूर्ध्वगोष्ठिकजातिः ॥ ११ ॥

सर्वमार्गैस्समुद्धृत्य यद्वाद्यकरणं भवेत् ।
उच्छ्रितां तद्विजानीयाद्गूढश्शृङ्खलिका भवेत् ॥ ७४६ ॥

घण्टाह्लादोऽथकितांघेङ्मानद्धिघुवगुदुघेङ् ।
एभिस्त्वक्षरयोगैः कार्या हास्ये तथोच्छ्रितिका ॥ ७४७ ॥

इत्युच्छ्रितिकजातिः ॥ १२ ॥

उत्तमचेटकदण्णीक (?) षकारसङ्कीर्णजातिकादीनाम् ।
गतिविन्यासविशेषैः कार्यं वाद्यं तु गोमुख्या ॥ ७४८ ॥

घं घेटाघटघंटाङ् गदुघेङ्मटद्धिमटघटघेङ् ।
एभिस्त्वक्षरयोगैरेवं वाद्यं भवेज्जातिः ॥ ७४९ ॥

वामनविह्वलखञ्जस्थूलाङ्गशल्यहतपादाः ।
एवं वाद्या जातिस्त्वेषां गमनेषु कर्तव्या ॥ ७५० ॥

इति वाद्यजातिः ॥ १३ ॥

पृथिवी वादितं यत्र सर्वातोद्येषु दृश्यते ।
मृदङ्गपणवादीनां सा जातिः सर्वमार्गिका ॥ ७५१ ॥

घ्रों घ्रों घ्रों ठें ठें ठें एभिर्जात्यक्षरैः समायुक्ता ।
दर्दुरमृदङ्गपणवादीनां स्त्रीणां भवेज्जातिः ॥ ७५२ ॥

इति सर्वमार्गिकजातिः ॥ १४ ॥

अवकीर्णं यद्वाद्यं त्रिगुणैर्वाद्यकरणैर्मृदङ्गानाम् ।
दर्दुरपणवोपगमादवकीर्णा नाम सा जातिः ॥ ७५३ ॥

केन्तां केन्तां केन्तामेभिर्जात्यक्षरैस्तु संयुक्ता ।
गोमुखमार्गे जातिस्सा च न्वेवङ्गुणा विधातव्या ॥ ७५४ ॥

इत्यवकीर्णजातिः ॥ १५ ॥

अर्धावकीर्णा विविधैः करणैरिहमार्गयोगलघुयुक्तैः ।
दर्दुरपणवमृदङ्गैरर्धार्धं वादने कार्यम् ॥ ७५५ ॥

डङ्गडवेण्टां गड्त्रामेभिर्जात्यक्षरैस्तु संयुक्ता ।
अर्धावकीर्णजातिः मृदङ्गवाद्योर्ध्वगालिङ्गये ॥ ७५६ ॥

इत्यर्धावकीर्णजातिः ॥ १६ ॥

सर्वाङ्गुलीचलनकृता सर्वमृदङ्गप्रहारसंबद्धा ।
भीतनभोगमनादिषु सम्प्लवजातिर्विधातव्या ॥ ७५७ ॥

दधिरेगुदुघेङ् गुदुघेङ् एभिर्जात्यक्षरैस्समायुक्ता ।
सम्प्लव इति विज्ञेयं कर्तव्या वादनैः करुणे ॥ ७५८ ॥

इति सम्प्लवजातिः ॥१७ ॥

दीप्तो नानाकरणैश्चित्रमृदङ्गप्रहारसंयुक्ता ।
स्वाभाविकोत्तमगतौ विधूतजातिर्विधातव्या ॥ ७५९ ॥

विन्यादिविनक्रां मटद्धिधमेभिर्जात्यक्षरैः समायुक्ता ।
एभिः स्वरसंयोगैर्विधूतजातिर्विधातव्या ॥ ७६० ॥

इति विधूतजातिः ॥ १८ ॥

एता गतिप्रचारेषु विज्ञेया जातयो बुधैः ।
याश्च नोक्ता मयाचास्मिन् ता ग्राह्या लोकतोऽर्थतः ॥ ७६१ ॥

**इत्यष्टादशजातिलक्ष्यलक्षणप्रपञ्चो निरूपितः ॥**

**अथ ग्रहलक्षणमुच्यते :—**

अत ऊर्ध्वं प्रवक्ष्यामि ग्रहान्भाण्डसमाश्रयान् ।
शम्यातालग्रहाः केचित्केचिद्वै तर्जनीग्रहाः ॥ ७६२ ॥

सन्निपातग्रहाः केचित्तथाकाशग्रहाः पुनः ।
तत्र शम्याग्रहा ज्ञेया नित्यं दक्षिणपुष्करे ॥ ७६३ ॥

वामोर्ध्वगे ग्रहश्चापि ज्ञेयास्तालग्रहा बुधैः ।
तर्जनीग्रहका नित्यमालिङ्ग्ये परिकीर्तिताः ॥ ७६४ ॥

सर्वपुष्करमार्गस्थाः सन्निपातग्रहाः स्मृताः ।
तथाकाशग्रहाः प्रोक्ता नैष्कामिक्यः प्रकीर्तिताः ॥ ७६५ ॥

आसारितानि शम्याद्यास्तालाद्यास्तु ध्रुवाङ्गजाः ।
यद्वा च न ग्रहं गानं तत्रस्यात्तर्जनीग्रहः ॥ ७६६ ॥

शीर्षकञ्चोर्ध्वताञ्चैव प्रदेशिन्या ग्रहाः स्मृताः ।
नृकुटस्याङ्कितायाश्च प्रसादिक्यस्तथैव च ॥ ७६७ ॥

सन्निपातग्रहा ज्ञेयास्तथाचैककलाविधिः ।
आकाशग्रहका ज्ञेयाश्चतुर्द्विकलयोगजाः || ७६८ ||

तथाचाङ्गनिबद्धानि सित[? शीत]कानि यथाक्रमम् ।
एवमेते बुधैर्ज्ञेया ग्रहा भाण्डसमाश्रयाः || ७६९ ||

इति ग्रहाः निरूपिताः ॥

### अथ विंशतिप्रकारलक्षणान्युच्यन्ते :—

अथ ऊर्ध्वं प्रवक्ष्यामि प्रकारान्वाद्यसंश्रयान् ।

**अथोद्देशः** : १. चित्रम्, २. समः, ३. विभक्तः, ४. छिन्नः, ५. छिन्नविद्धः, ६. विद्धः, ७. अनुविद्धः, ८. स्वरूपः, ९. स्वरूपानुगतः, १०. अनुसृतः, ११. अनुसृतच्युतः, १२. दुर्गम्, १३. अवकीर्णः, १४. अर्धावकीर्णः, १५. एकरूपः, १६. परिक्षिप्तः, १७. साचीकृतम्, १८. समलेखः, १९. चित्रलेखः, (१९.अ.) सर्वसमवायः, २०. दृढः, इति ।

### एतेषां लक्षणान्युच्यन्ते :—

रिभिताभिः प्रयुक्तं चित्रैः करणैरनेकविधहस्तैः || ७७० ||

त्रिलयं त्रिपाणियुक्तं चित्रं वाद्यं बुधैर्ज्ञेयम् ।

इति चित्रम् ॥ १ ॥

दर्दुरपणवमृदङ्गैः नानाकरणैस्तु यः सम्यक् || ७७१ ||

समयतितालाङ्ग्युत स तु विज्ञेयः समो नाम ।

इति समः ॥ २ ॥

नाल्यायतस्तथा स्यादिह मस्थानस्थितो विभक्तश्च ॥ ७७२ ॥

अक्षरपाणिलयेषु च विभक्तकरणो विभक्तस्तु ।

इति विभक्तः ॥ ३ ॥

वाद्य द्रुतलयं यत्र सहसा विनिवर्तते ॥ ७७३ ॥

सर्वातोद्यप्रयुक्तस्तु प्रकारश्छिन्न एव सः ।

इति छिन्नः ॥ ४ ॥

अवपाणिर्मृदङ्गानां पणवोपरिपाणिकः ॥ ७७४ ॥

भवतो यत्र वाद्येषु छिन्नविद्ध इति स्मृतः ।

इति छिन्नविद्धः ॥ ५ ॥

मृदङ्गकरणे वाद्यं पणवो वेधयेद्यदि ॥ ७७५ ॥

सूचीविद्धैर्विचित्रैस्तु करणैर्विद्ध उच्यते ।

इति विद्धः ॥ ६ ॥

विद्धानुविद्धं यद्वाद्यं सर्वातोद्येषु दृश्यते ॥ ७७६ ॥

परस्परविरोधे तु अनुविद्धस्तु स स्मृतः ।

इति अनुविद्धः ॥ ७ ॥

विशुद्धवाद्यप्रकृति समकृत्तालकृत्तथा ॥ ७७७ ॥

स्वरूपोपगतश्चैव स्वरूप इति स स्मृतः ।

इति स्वरूपः ॥ ८ ॥

मुरजातपणवो वापि पणवाद्दर्दुरोऽपि वा ॥ ७७८ ॥

तथानुयायादातोद्यं स्वरूपानुगतस्तु सः ।

इति स्वरूपानुगतः ॥ ९ ॥

अनुगत्यवदातोद्यं गच्छेद्यत्समयं पुनः ॥ ७७९ ॥

श्रुतवत्समता वाद्ये तदानुसृत उच्यते ।

इत्यनुसृतः ॥ १० ॥

एकैकानुगतं मार्गं वाद्यजातिसमन्वितम् ॥ ७८० ॥

कृतान्यजातिकं कुर्यात्तदानुसृतविच्युतः ।

इत्यनुसृतविच्युतः ॥ ११ ॥

यत्र प्रचारं विषमं सर्वमार्गप्रबोधनम् ॥ ७८१ ॥

अविभक्ताक्षरपदं तद्दुर्गं वाद्यमुच्यते ।

इति दुर्गम् ॥ १२ ॥

समवृत्तमृदङ्गस्तु वाद्यते पणवैर्यदा ॥ ७८२ ॥

नानाविचित्रकरणैरवकीर्णस्तदा स्मृतः ।

इत्यवकीर्णः ॥ १३ ॥

द्रुतं लयं समारभ्य पणवो दर्दुरोऽपि वा ॥ ७८३ ॥

अवपाणौ पुनर्याति तदात्वर्धावकीर्णकः ।

इत्यर्धावकीर्णः ॥ १४ ॥

सर्वातोद्यानि यत्रैकं करणं भावयन्ति च ॥ ७८४ ॥

समवृत्तपदान्येव एकरूप इति स्मृतः ।

इत्येकरूपः ॥ १५ ॥

(पणवश्चोदितं यत्र वाद्यम)[1]ल्पमृदङ्गजम् ॥ ७८५ ॥

सुविभक्ताक्षरपदं परिक्षिप्तस्तु स स्मृतः ।

इति परिक्षिप्तः ॥ १६ ॥

चित्रं हि करणं यत्र पदेनैकेन वाद्यते ॥ ७८६ ॥

नृत्ताङ्गहारानुगतं ज्ञेयं साचीकृतन्तु तत् ।

इति साचीकृतम् ॥ १७ ॥

कृत्वोपरिगतं वाद्यं पणवो दर्दुरोऽपि वा ॥ ७८७ ॥

यत्रोदीक्षेत मुरजं समलेखस्तु स स्मृतः ।

इति समलेखः ॥ १८ ॥

चित्रं बहुविधं वाद्यं मृदङ्गपणवादिभिः ॥ ७८८ ॥

क्रियते यत्र संरब्धैश्चित्रलेखस्तु स स्मृतः ।

इति चित्रलेखः ॥ १९ ॥

सर्वमार्गकृतो यस्तु सर्वपाणिलयाश्रयः ॥ ७८९ ॥

---

[1] अयमंशः मातृकायां पतितः ।

विचित्रश्च विभक्तश्च स सर्वसमवायकः ।

इति सर्वसमवायकः ॥ १९. अ. ॥[1]

यस्तु मध्यलयोपेतः समः सुविहिताकरः ॥ ७९० ॥

गतिप्रचारविहितः प्रकारो दृढ एव सः ।

इति दृढः ॥ २० ॥

एवमेते प्रकारास्तु कर्तव्या नात्र संशयाः ॥ ७९१ ॥

गतिप्रचारे गीते च रसभावौ समीक्ष्य तु ।
एते प्रकारा जात्यश्च सर्वमार्गेषु संस्मृताः ॥ ७९२ ॥

ये वै गतिप्रचारेषु शुद्धास्ते केवलाः स्मृताः ।

इति प्रकारा निरूपिताः ॥

**इति भारतीयोक्तमृदङ्गपणवादिवाद्यानां षोडशाक्षरादिविंशतिप्रकारान्तानां क्वचिल्लक्षणानि क्वचिल्लक्ष्यानि क्वचिदुद्देशश्च क्वचित्समुदायश्च लिखितः ॥**

**अथ रत्नाकरोक्तः वाद्यप्रबन्धोद्देशः कथ्यते :—**

उद्ग्राहादिनिबद्धाः स्युरत्र गीतप्रबन्धवत् ॥ ७९३ ॥

वाद्यप्रबन्धास्तद्भेदलक्ष्माण्यभिदधेऽधुना ।
यतिरोता च गजरो रिगोणी कवितं पदम् ॥ ७९४ ॥

---

[1] अयञ्च प्रकारः उद्देशलक्षणकथनावसरे वर्णितः । एवं एकविंशतिः प्रकारा भवन्ति । अत एव अस्माभिः एवंविधः. चिन्हः कृतः ॥

मेलापकश्चोपशमोद्गाहप्रहरणान्यथ ।
अवत्सकश्छण्डणश्च तुडुका मलपं ततः ॥ ७९५ ॥

मलपाङ्गञ्च मलपपाटश्छेदोऽथ रूपकम् ।
अन्तरोऽन्तरपाटश्च खोज्जः खण्डयतिस्तथा ॥ ७९६ ॥

खण्डच्छेदोऽप्यवयतिः खण्डपाटश्च खण्डकः ।
खण्डहुल्लः समः पाटो ध्रुवकोऽङ्गाङ्गरूपके ॥ ७९७

तालो वितालः खलकः समुदायश्च जोडणी ।
उडुपस्तलपाटश्चोट्टवणी तुण्डकस्तथा ॥ ७९८ ॥

अङ्गपाटश्च पैसारस्त्रिचत्वारिंशदित्यमी ।
उक्ताः श्रीकरणाग्रण्या प्रबन्धा वाद्यसंश्रयाः ॥ ७९९ ॥

**इत्युद्देशः । एतेषां लक्ष्यलक्षणप्रपञ्चो रत्नाकर एव द्रष्टव्यः । अस्य ग्रन्थस्य सङ्ग्रहत्वाद्विस्तारभीतेन मुम्मडिचिक्कभूपालेन नात्र लिखितः ॥**

**अथ रत्नाकरोक्तं वाद्यक्रमप्राप्तं घनवाद्यलक्षणं निगद्यते । तत्र प्रथमं तावत् नाट्यप्रशस्ततालस्वरूपं निरूप्यते :—**

कांस्यजं घनवाद्यं स्यात्कांस्यमग्नौ तु शोधितम् ।
कांस्यजो वर्तुलस्तालस्सपादत्र्यङ्गुलाननः ॥ ८०० ॥

मध्येऽस्याङ्गुलविस्तारो निम्नो रन्ध्रञ्च मध्यगम् ।
पादोनगुञ्जमात्रं स्यात्पिण्डस्तु यवमात्रकः ॥ ८०१ ॥

सार्धाङ्गुलः स्यादुत्सेधः समः श्लक्ष्णः शुभाकृतिः ।
कार्यस्तथा यथा नादो भवेत् श्रुतिमनोहरः ॥ ८०२ ॥

नेत्रे वस्त्राञ्चलाग्राणि रज्जुं कृत्वा निवेश्य च ।
रन्ध्रेऽग्राणामनिर्गत्यै ग्रन्थिञ्च रचयेद्दृढम् ॥ ८०३ ॥

ईदृक्तालयुगं कृत्वा तालमेकमथाञ्चलैः ।
आवेष्ट्य तर्जनीं वाममङ्गुष्ठेन च वेष्टयेत् ॥ ८०४ ॥

आक्रम्य तलमध्यस्थं कृत्वा तिर्यङ्मुखीकृतम् ।
शेषाङ्गुलीः प्रसार्याऽधो दक्षिणेन तु पाणिना ॥ ८०५ ॥

तालमन्यतलस्यान्तः लम्बमानाञ्चलाञ्चलिम् ।
तर्जन्यङ्गुष्ठयोरग्रत्यागतस्तिर्यगाननम् ॥ ८०६ ॥

धृत्वा तस्याग्रभागेन मध्यमन्यस्य ताडयेत् ।
अल्पनादा भवेच्छक्तिः भूरिनादः शिवो भवेत् ॥ ८०७ ॥

शिवे स्निग्धे घनो नादः शक्तौ स्यात्तद्विपर्ययः ।
वामेन धारयेच्छक्तिं शिवं दक्षिणपाणिना ॥ ८०८ ॥

अश्वमेधफलञ्चैव प्राप्नुयाद्दोपमन्यथा ।
देवता तुम्बुरुर्युग्मे शक्तिः शक्तौ शिवे शिवः ॥ ८०९ ॥

द्रुतादिसिद्ध्यै तन्त्रादधृतिरूर्ध्वाङ्गुलीकृता ।
कल्पनेत्युच्यते कार्यमन्यत्स्यात्तालधारणम् ॥ ८१० ॥

निःशङ्कशार्ङ्गदेवेन पाटाः सर्वे प्रकीर्तिताः ।

**इति रत्नाकरोक्तं नाट्यप्रशस्ततालक्षणम् ॥**

## ग्रन्थान्तरे

शुद्धं पलाष्टकञ्चैव सूळेयं षट्पलं तथा ॥ ८११ ॥

सङ्कीर्णश्च चतुष्कं स्यात्तालधारी च धारयेत् ।

हरिपालीये

निर्दिश्यतेऽनन्तरतः तालनिर्माणलक्षणम् ॥ ८१२ ॥

कांस्येन तालयोर्युग्मं कुर्याच्छुद्धेन बुद्धिमान् ।
वर्तुलं मध्यतो निम्नमङ्गुलित्रितयाननम् ॥ ८१३ ॥

यवप्रमाणविवरं तले त्वङ्गुलिमात्रके ।
विस्तारे द्व्यङ्गुलाकारं पिण्डेऽपि यवमात्रकम् ॥ ८१४ ॥

तुल्यप्रमाणमन्योन्यं ग्रथितं पट्टतन्तुना ।
तर्जनीन्तु समावेष्ट्य तत्र वामं प्रपीड्य च ॥ ८१५ ॥

अङ्गुष्ठेन ततस्तस्य वादनं कारयेद्बुधः ।

**इति हरिपालीयोक्तं नाट्यप्रशस्ततालक्षणम् ॥**

**अथ रत्नाकरोक्तं वाद्यमेळप्रशस्तकांस्यतालस्वरूपं निरूप्यते :—**

नलिनीदलसङ्काशौ कांस्यतालौ समाकृती ॥ ८१६ ॥

त्रयोदशाङ्गुलौ वक्त्रे कांस्यजौ द्व्यङ्गुलौ तले ।
मध्येऽङ्गुलमिते निम्नौ तयोरन्यत्तु तालवत् ॥ ८१७ ॥

पाटा झटकटी मुख्याः सन्ति पाटान्तराण्यपि ।
नारदो देवता चात्रेत्युक्तं सोढलसूनुना ॥ ८१८ ॥

हरिपालीये

कांस्यतालाश्रयं सम्यग्लक्षणं कथ्यतेऽधुना ।
कांस्यतालौ विधीयेते पङ्केरुहदलाकृती ॥ ८१९ ॥

त्रयोदशाङ्गुलमुखौ तलयोर्ध्यङ्गुलौ ततः ।
तन्मध्येऽङ्गुलनिम्नौ च तयोच्छिद्रादिपूर्ववत् ॥ ८२० ॥

एकशब्दतया नोक्तं कांस्यतालस्य लक्षणम् ।

**इति वाद्यप्रशस्तकांस्यताललक्षणम् ॥**

**अथ रत्नाकरोक्तं घण्टावाद्यलक्षणं लक्ष्यते :—**

अर्धाङ्गुलमितिः पिण्डे घण्टा कांस्यमयी भवेत् ॥ ८२१ ॥

उच्छ्रायेऽष्टाङ्गुला वक्त्रे विशाला मूलतोऽल्पिता ।
सा च प्रासादसम्बद्धकलशाकृतिधारिणी ॥ ८२२ ॥

मूले दण्डं त्रिशृङ्गाग्रं दधती मूलसंयुतम् ।
षडङ्गुलायतं सार्धाङ्गुलपिण्डावलम्बितम् ॥ ८२३ ॥

लोहजं तालकं गर्भे दधानां तामधोमुखीम् ।
दण्डे धृत्वा ठणत्कारबहुलं वादयेत्सुधीः ॥ ८२४ ॥

सा सर्वदेवता तद्ज्ञैः वाद्यते देवतार्चने ।

**इति घण्टावाद्यलक्षणम् ॥**

**क्षुद्रघण्टिकालक्षणस्य नृत्ताध्याये पात्रलक्षणप्रस्तावे प्रशस्तत्वात् तत्रैव लिखितमिति कृत्वा अत्र तल्लक्षणं न लिखितम् ॥**

**अथ रत्नाकरोक्तं जयघण्टावाद्यलक्षणं लक्ष्यते :—**

कांस्यजा हस्तमात्रा स्यात्पिण्डे त्वर्धाङ्गुला घना ॥ ८२५ ॥

जयघण्टा समा श्लक्ष्णा वृत्ता प्रान्ते द्विरन्ध्रभाक् ।
धृत्वा तद्रन्ध्रविन्यस्तरज्जौ तां वामपाणिना ॥ ८२६ ॥

दक्षिणे दक्षिणस्थेन दृढकोणेन वादयेत् ।
ढेङ्कारबहुलाः पाटाः सर्वे स्युः शार्ङ्गिणोदिताः ॥ ८२७ ॥

इति जयघण्टावाद्यलक्षणम् ॥

अथ रत्नाकरोक्तं कम्रिकावाद्यलक्षणं लक्ष्यते :–

खट्वा (खादिरं) सघनवेणूत्थं यद्वा कम्राचतुष्टयम् ।
श्लक्ष्णं द्व्यङ्गुलविस्तारं द्वादशाङ्गुलदैर्घ्यकम् ॥ ८२८ ॥

मध्ये पिण्डो यथाशोभं किञ्चिन्न्यूनं ततोऽन्तयोः ।
यस्य तत्कम्रिकावाद्यं तत्र द्वे द्वे तु कम्रिके ॥ ८२९ ॥

एकैकहस्तविन्यस्ते तयोरेकैककम्रिकाम् ।
मध्यमाङ्गुष्ठयोर्मूले धृत्वा प्रान्ते तयोः पुनः ॥ ८३० ॥

अपरामपरां धृत्वा शिथिलां वादयेद्धिया ।
कम्पेन मणिबन्धस्य कम्रिकावादनं मतम् ॥ ८३१ ॥

पाटाः किरिकिटा मुख्यास्तत्र पाटान्तराण्यपि ।
कम्राणामन्तरं कृत्वाऽनामया दक्षिणस्थया ॥ ८३२ ॥

तलघाताङ्गुष्ठमुष्टेः वामस्येत्यपरे जगुः ।

इति रत्नाकरोक्तं कम्रिकावाद्यलक्षणम् ॥

अथ तदुक्तं शुक्तिकावाद्यलक्षणं निगद्यते :—

सर्पाकृतिरथो निम्ना कांस्यजा लोहजाऽथवा ॥ ८३३ ॥

शुक्तिस्त्र्यङ्गुलविस्तारा सार्धहस्तद्वयायता ।
तिर्यग्रेखाराजिता च मृगशृङ्गोपमेन सा ॥ ८३४ ॥

ऋजुना लोहकोणेन सरेखेण विकर्षणात् ।
वाद्यते किरिकिट्टेति पाटा यक्षास्तु देवताः ॥ ८३५ ॥

यतिमात्रावबोधेनेत्युक्तं निश्शङ्कसूरिणा ।
किरिकिट्टकमित्युक्तं तल्लोके रुद्रवल्लभम् ॥ ८३६ ॥

## इति शुक्तिकावाद्यलक्षणम् ॥

## अथ पट्टवाद्यलक्षणम् :—

श्रीपर्णीदारुजः पट्टश्चतुरश्रायतो भवेत् ।
द्वात्रिंशदङ्गुलो दैर्घ्यैऽन्यैरुक्तस्त्रिंशदङ्गुलः ॥ ८३७ ॥

विस्तारो हस्तमात्रः स्यादूर्ध्वाधःस्थितयोर्द्वयोः ।
लोहमय्योः सरिकयोस्त्रिवृद्रज्जूपमायुजोः ॥ ८३८ ॥

क्षिप्ताभिस्ताद्दशक्षुद्रवलयावलिभिर्युतः ।
वक्षोऽग्रे जानुनोर्मध्ये यद्वा सन्धार्य वाद्यते ॥ ८३९ ॥

अयञ्च करशाखाग्रै रालालिप्तो विघृष्यते ।
करघौ डटरमाः पाटाः पटहस्येव सम्मताः ॥ ८४० ॥

सप्तात्र देवमुनयो देवताः शार्ङ्गिणोदिताः ।

## इति रत्नाकरोक्तं पट्टवाद्यलक्षणम् ॥

सन्त्यन्यान्यपि वाद्यानि लोके भूयांसि यानि च ॥ ८४१ ॥

तेषु विस्तारसंत्रासादुदास्ते सोढलात्मजः ।

॥ इति घनवाद्यलक्षणं समाप्तम् ॥

॥ अथ भारतीयोक्तो देवताभ्यर्चनविधिः :—

देवताभ्यर्चनं कृत्वा ततः स्थाप्य महीतले ॥ ८४२ ॥

चित्रायामथवा हस्तेऽहनि पुण्ये शुभे तिथौ ।
उपाध्यायः शुचिर्भूत्वा कुलीनो रागवर्जितः ॥ ८४३ ॥

घनज्ञो गीततत्वज्ञो मधुरो नियतेन्द्रियः ।
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रतः ॥ ८४४ ॥

मण्डलत्रयमालिख्य गोमयेन सुगन्धिना ।
ब्रह्माणं शङ्करं विष्णुं त्रिषु तेषु प्रकल्पयेत् ॥ ८४५ ॥

आलिङ्ग्यं स्थापयेत् पूर्वं ब्रह्माणं पूर्वमण्डले ।
ऊर्ध्वगन्तु द्वितीयस्मिन् रुद्रनाम्ना निपातयेत् ॥ ८४६ ॥

अङ्क्यं तिर्यग्गतिं कृत्वा सम्यग्वैष्णवमण्डले ।
बलिपुष्पोपहारैश्च नानापुष्पैर्विचित्रकैः [1] ॥ ८४७ ॥

आलिङ्ग्ये च बलिं दद्यान्मधुपायससमिश्रितम् ।
अपूपोल्लपिकामिश्रं अङ्किते सम्प्रदापयेत् ॥ ८४८ ॥

अनन्तरञ्च दातव्यः सव्यहस्तोर्ध्वगे बलिम् ।
स्वस्तिकोपरि धूपैश्च एवं चित्रतिलैः सह ॥ ८४९ ॥

---

[1] अयं श्लोकार्धः ग्रन्थकारेण नोद्धृतः ।

उन्मत्तमधुरैः पुष्पैरन्यैः पुष्पैश्च भूषितः ।
बलिः कार्यः प्रयत्नेन रक्तवस्त्रैश्च वै सह ॥ ८५० ॥

( वैष्णवे मण्डले स्थाप्यं सर्वबीजगतोंसिकम् ।
शुद्धस्यालम्बि ऐलैश्च चारुभिश्च सहासरैः ?) ॥ ८५१ ॥

वाचयित्वा द्विजान् स्वस्ति दत्वाऽपूपञ्च दक्षिणाम् ।
पूजयित्वा च गन्धर्वान् पश्चाद्वाद्यं समाचरेत् ॥ ८५२ ॥

तन्त्रीभिः पणवन्तु स्यात्समृष्टाभिः समन्ततः ।
घातपुष्कलिकाश्चैव योजयेत्तत्र कर्मणा ॥ ८५३ ॥

मृदङ्गभाण्डपणवा कर्तव्या दर्दुरास्तथा ।
देवतानि च वक्ष्यामि यान्येषाञ्चाङ्गवन्ति हि ॥ ८५४ ॥

लक्ष्ये श्लक्ष्णः शङ्कुकर्णे ग्रामणीश्च तथा महान् ।
एतास्तु देवता विप्रा मुरजेषु प्रकीर्तिताः ॥ ८५५ ॥

मृण्मयत्वान्मृदङ्गन्तु भाण्डे भाण्डाकृतीति च ।
मुरजं तद्विकरणादातोद्यं तोदनात्तथा ॥ ८५६ ॥

भाण्डस्यापि प्रमाणेन पणवश्च विधीयते ।
धारणात्पणवाद्यानां दर्दुरः परिकीर्तितः ॥ ८५७ ॥

दृष्टो मृदङ्गपणवौ दर्दुरश्च महामुनिः ।
मेघैस्तु स्वरसंवादान्मृदङ्गानां समास्थितिः ॥ ८५८ ॥

वि जिह्वा भवेद्वाद्यो मेघस्य तु महात्मनः ।
ऐरावतो महामेघस्तथाचैवोर्ध्वगो भवेत् ॥ ८५९ ॥

अलिङ्ग्ये च तडित्ख्याता नाम्ना मेघो बलाहकः ।
दक्षिणे पुष्करे मेघः कोकिलो नाम स स्मृतः || ८६० ||

मृदङ्गश्चैव नाम्ना तु ऊर्ध्वगो नान्यथोच्यते ।
अङ्गिरन्धिसिरिल्येवमालिङ्ग्यश्चाप्यपिङ्गलः || ८६१ ||

तत्प्रियोऽपि बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता ।
पूजयित्वा तु तां देवीं प्रेक्षां रङ्गे प्रकल्पयेत् || ८६० ||

करिष्यति सदा चान्ते मृदङ्गान् स्थापयेद्बुधः ।
नाटकेऽङ्के प्रकरणे वीथ्यां भाणे डिमे तथा || ८६१ ||

मृदङ्गपणवांश्चापि दर्दुरञ्चोपपातयेत् ।
एवमेतद्बुधैर्ज्ञेयं मृदङ्गानान्तु लक्षणम् || ८६२ ||

**इति भारतीयोक्तो देवताभ्यर्चनविधिः ॥**

श्रीशेषाहार्यरत्नप्रभुपदकमलद्वन्द्वविन्यस्तचित्तः ।
तन्नामध्यानयोगः कुशलकरशनेर्वीरनिष्ठागरिष्ठः || ८६३ ||

दीर्घायुः पुत्रपौत्रप्रकरविगदताराज्यभाव्यार्थयुक्तः ।
श्रीमद्विज्ञानरेन्द्रो मधुगिरिनिलये मुम्मडीचिक्कभूपः || ८६४ ||

वृषाचलाधीशपदारविन्दे समर्पितेऽस्मिन् भरतप्रबन्धे ।
विनूत्नसारे घनसङ्ग्रहे च वाद्याधिकारं व्यतनोत्समर्म ॥

**इति वाद्याधिकारः प्रथमोऽध्यायः ॥**



श्री मुम्मडिचिक्कभूपालविरचितः

# अभिनवभरतसारसंग्रहः

## गीताध्यायः प्रारम्भः

**वाक्यम्—अथास्मिन् गीताध्याये गीतस्य प्राधान्यादादौ रत्नाकरोक्तसङ्गीतलक्षणोक्तिद्वारा गीतमाहात्म्यं वक्तुकामेन मुम्मडिचिक्कभूपालेन प्रथमं तावत्सङ्गीतलक्षणमुच्यते :—**

गीतं वाद्यं तथा नृत्तं त्रयं सङ्गीतमुच्यते ।
मार्गो देशीति तद्द्वेधा तत्र मार्गः स उच्यते ॥ १ ॥

यो मार्गितो विरिञ्च्याद्यैः प्रयुक्तो भरतादिभिः ।
देवस्य पुरतः शंभोः नियताभ्युदयप्रदः ॥ २ ॥

**इति मार्गसङ्गीतलक्षणम् ॥**

देशे देशे जनानां यद्रुच्या हृदयरञ्जकम् ।
गानञ्च वादनं नृत्तं तद्देशीत्यभिधीयते ॥ ३ ॥

**इति देशीसङ्गीतलक्षणम् ॥**

**इत्थं सङ्गीतलक्षणमुक्त्वा गीतप्राधान्यमुच्यते :—**

नृत्तं वाद्यानुगं प्रोक्तं वाद्यं गीतानुवर्ति च ।
अतो गीतं प्रधानत्वादत्रादावभिधीयते ॥ ४ ॥

सामवेदादिदं गीतं सञ्जग्राह पितामहः ।
गीतेन प्रीयते देवः सर्वज्ञः पार्वतीपतिः ॥ ५ ॥

गोपीपतिरनन्तोऽपि वंशध्वनिवशं गतः ।
सामगीतरतो ब्रह्मा वीणाऽऽसक्ता सरस्वती ॥ ६ ॥

किमन्ये यक्षगन्धर्वा देवदानवमानवाः ।
अज्ञातविषयास्वादो बालः पर्यङ्किकातले ॥ ७ ॥

हृद्यं गीतामृतं पीत्वा हर्षोत्कर्षं प्रपद्यते ।
वनेचरस्तृणाहारः चित्रं मृगशिशुः पशुः ॥ ८ ॥

लुब्धो लुब्धकसङ्गीते गीते यच्छति जीवितम् ।
तस्य गीतस्य माहात्म्यं के प्रशंसितुमीशते ॥ ९ ॥

धर्मार्थकाममोक्षाणामिदमेकैकसाधनम् ।

**इति गीतस्य माहात्म्यमुक्त्वा तद्गीतस्य नादादित्वात् तत्रादौ नादस्वरूपं वक्तुं सङ्गीतरत्नाकरोक्तस्वरगतरागविवेकप्रकीर्णकप्रबन्धाध्यायेषूक्तपिण्डोत्पत्त्यादिगीतदोषान्तोद्देशः क्रमात् कथ्यते :—**

शरीरं नादसंभूतिः स्थानानि श्रुतयस्तथा ॥ १० ॥

ततः शुद्धाः स्वराः सप्त विकृता द्वादशाप्यमी ।
कुलानि जातयो वर्णा द्वीपान्यार्षञ्च दैवतम् ॥ ११ ॥

छन्दांसि विनियोगाश्च स्वराणां श्रुतिजातयः ।
ग्रामाश्च मूर्छनास्तानाः शुद्धाः कूटाश्च सङ्ख्यया ॥ १२ ॥

प्रस्तारः खण्डमेरुश्च नष्टोद्दिष्टप्रबोधकः ।
स्वरसाधारणं जातिसाधारणमतः परम् ॥ १३ ॥

काकल्यन्तरयोः सम्यक्प्रयोगो वर्णलक्षणम् ।
त्रिषष्टिरप्यलङ्कारास्त्रयोदशविधं ततः ॥ १४ ॥

जातिलक्ष्म ग्रहांशादि कपालानि च कम्बलम् ।
नानाविधा गीतयश्चेत्येतावान्वस्तु सङ्ग्रहः[1] ॥ १५ ॥

ग्रामरागांश्चोपरागान्रागान्भाषा विभाषिकान् ।
ततो ऽप्यन्तरभाषाख्यान् रागाङ्गान्यखिलान्यपि ॥ १६ ॥

भाषाङ्गान्यप्युपाङ्गानि क्रियाङ्गानि च तत्त्वतः ।
वाग्गेयकारो गान्धर्वः स्वरादिर्गायकस्ततः ॥ १७ ॥

गायनी गुणदोषाश्च तयोः शब्दभिदास्तथा ।
गुणदोषाश्च शब्दस्य शारीरं तद्गुणास्तथा ॥ १८ ॥

तद्दोषा गमकाः स्थाया आलप्तिर्बृन्दलक्षणम् ।
ततस्तु धातवोङ्गानि जातयस्तु ततः परम् ॥ १९ ॥

प्रबन्धानां द्विधा सूडः शुद्धश्छायालगस्तथा ।
आलिक्रमप्रबन्धाश्च सूडस्था आलिसंश्रयाः ॥ २० ॥

विप्रकीर्णास्ततश्छायालगसूडसमाश्रिताः ।
गीतस्य गुणदोषाश्च वक्ष्यन्ते सूरिशार्ङ्गिणा ॥ २१ ॥

इत्येतदुद्देशानुसारेणास्य ग्रन्थस्य सङ्ग्रहत्वाद्विस्तरभीरुणा मद्गिरिशासनाङ्केन मुम्मडिचिक्कभूपालेन यथोचितं नादादीनां लक्ष्यलक्षणानि वक्तुकामेन सता प्रथमं तावद्रत्नाकरोक्तं नादस्वरूपं निरूप्यते :—

---

[1] अयं श्लोकार्धः ग्रन्थकारेण नोद्धृतः ।

गीतं नादात्मकं वाद्यं नादव्यक्त्या प्रशस्यते ।
तद्द्वयानुगतं नृत्तं नादाधीनमतस्त्रयम् ॥ २२ ॥

नादेन व्यज्यते वर्णः पदं वर्णात्पदाद्वचः ।
वचसो व्यवहारोऽयं नादाधीनमतो जगत् ॥ २३ ॥

आहतोऽनाहतश्चेति द्विधा नादो निगद्यते ।
सोऽयं प्रकाशते पिण्डे तस्मात्पिण्डोऽभिधीयते ॥ २४ ॥

**अत्र पिण्डोत्पत्तेर्वक्तव्यत्वेऽपि तस्य विस्तरत्वात् तत्त्यक्त्वा पुनर्नादस्वरूपमेव कथ्यते । तत्र रत्नाकरे :—**

नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः ।
भवन्त्युपासिता नूनं यस्मादेते तदात्मकाः ॥ २५ ॥

आत्मा विवक्षमाणोऽयं मनः प्रेरयते मनः ।
देहस्थं वह्निमाहन्ति स प्रेरयति मारुतम् ॥ २६ ॥

ब्रह्मग्रन्थिस्थितः सोऽथ क्रमादूर्ध्वपथे चरन् ।
नाभिहृत्कण्ठमूर्धास्येष्वाविर्भावयते ध्वनिम् ॥ २७ ॥

नादोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ।
इति पञ्चाभिधां धत्ते पञ्चस्थानकृतक्रमात् ॥ २८ ॥

**एतन्नादस्य व्युत्पत्तिः कथ्यते :—**

नकारं प्राणनामानं दकारमनलं विदुः ।
जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते ॥ २९ ॥

व्यवहारे त्वसौ त्रेधा हृदि मन्द्रोऽभिधीयते ।
कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥ ३० ॥

## हरिपालीयोक्तं नादमुख्यत्वमुच्यते :—

न गीतं नादरहितं न नृत्तं नादवर्जितम् ।
न वाद्यं नादविकलं तस्मान्नादस्य मुख्यता ॥ ३१ ॥

नादं श्रुतिस्वरग्रामं मूर्छनातानवर्णकाः ।
अलङ्कारोऽथ गमकं जातिरागौ तथापरौ ॥ ३२ ॥

रागाङ्गभाषाभाषाङ्ग विभाषान्तरभाषिताः ।
उपाङ्गञ्च क्रियाङ्गञ्चेत्यङ्गान्यष्टौ तथा दश ॥ ३३ ॥

गीतस्य कथितान्येषां क्रमाल्लक्षणमुच्यते ।[1]
शरीराज्जायते नादो योऽग्निमारुतयोगतः ॥ ३४ ॥

स शरीरो मुखाद्यस्तु कृत्रिमस्तस्य मुख्यता ।
रागं वर्णोपपदं तालोप्येतेन व्यज्यते यतः ॥ ३५ ॥

इति नादस्य लक्ष्मैतन्नादादुत्पद्यते श्रुतिः ।

## सङ्गीतसारोक्तं नादलक्षणं कथ्यते :—

पिण्डादुत्पद्यते नादो नादाद्गीतं प्रवर्तते ॥ ३६ ॥

नादोत्पत्तिं क्रमादत्र सविधामभिधीमहे ।
नाभौ यत्कर्मचक्रं स्यात्तस्य कण्ठेतु पद्मिनी ॥ ३७ ॥

तस्या नाले च यत्पत्रं तस्मिंश्च कमलं स्थितम् ।
तत्रापि ज्वलनोभूतो वायोस्तस्माच्च संभवः ॥ ३८ ॥

---

[1] इदं सार्धं श्लोकद्वयं हरिपालीयमूलमातृकायां अधिकं दृश्यते । ग्रन्थकारेण तु नोपात्तम् ।

ततः सिद्धध्वनिर्योगादेषां नादस्तु जायते ।
वाद्यं तालश्च गीतञ्च स्वरश्चेति चतुष्टयम् ॥ ३९ ॥

नादाधीनं प्रसिद्धं स्यादतो नादात्मकं जगत् ।
नादात्मानस्त्रयो देवाः ब्रह्मविष्णुमहेश्वराः ॥ ४० ॥

परं ब्रह्म परा शक्तिः ओङ्कारो नादसम्भवः ।
नकारः प्राण इत्युक्तो दकारो वह्निरुच्यते ॥ ४१ ॥

संयोगान्नादशब्दःस्यात्स च पञ्चविधस्ततः ।
अतिसूक्ष्मस्तथा सूक्ष्मः पुष्टो ऽपुष्टश्च कृत्रिमः ॥ ४२ ॥

नाभिदेशे ऽतिसूक्ष्मः स्यात्सूक्ष्मश्च हृदये भवेत् ।
पुष्टः कण्ठेत्वपुष्टस्तु शिवे (?) शक्तौ तु कृत्रिमः ॥ ४३ ॥

मन्द्रादिस्थानभेदेन त्रिधा नादः प्रकीर्तितः ।

**इति नादस्वरूपं निरूपितम् ॥**

**अथ रत्नाकरोक्तं श्रुतिस्थानलक्षणम् :—**

तस्य द्वाविंशतिर्भेदाः श्रवणात् श्रुतयो मताः ॥ ४४ ॥

हृद्यूर्ध्वनाडीसंलग्ना नाड्यो द्वाविंशतिर्मताः ।
तिरश्च्यस्तासु तावत्यः श्रुतयो मारुताहतेः ॥ ४५ ॥

उच्चोच्चतरतायुक्ताः प्रभवन्त्युत्तरोत्तरम् ।
एवं कण्ठे तथा शीर्षे श्रुतिर्द्वाविंशतिर्मता ॥ ४६ ॥

**इति स्थानलक्षणम् । लक्ष्यन्तु नोक्तम् ॥**

**अथ सङ्गीतसारोक्तः श्रुत्युद्देशः कथ्यते :—**

द्वाविंशतिश्रुतीनाञ्च नामानि च यथाक्रमम् ।
नादान्ता निष्फला गूढाः सकला मधुराः कथाः ॥ ४७ ॥

तद्धिचैकाक्षरा भृङ्गरीतिश्च रथगीतिका ।
सम्प्रोक्ता रञ्जिता पूर्णा ख्यातालङ्कारिणी तथा ॥ ४८ ॥

वांशी च मणिका चैव त्रिस्थाना ललिता तथा ।
सुस्वरा चैव भाषाङ्गा पालिका च प्रकीर्तिता ॥ ४९ ॥

संपूर्णा च प्रसन्ना च श्रुतयो नामतस्त्वमी[1] ।

**इत्युद्देशः । एतासां श्रुतीनां लक्षणं नोच्यते । मतान्तरोक्तं श्रुतिलक्षणं लक्ष्यते :—**

प्रथमं श्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः ॥ ५० ॥

सा श्रुतिः सुपरिज्ञेया स्वरागमनलक्षणा ।

**अथ हरिपालीयोक्तं श्रुतिलक्षणं लक्ष्यते :—**

वचनाद्धट्टनात्तन्त्र्या यस्त्वदुत्पद्यते ध्वनिः ॥ ५१ ॥

श्रवण........प्रीतिस्सा[2] श्रुतिरभिधीयते ।

**सङ्गीतसारे**

सांप्रतं ताश्च कथ्यन्ते क्रियते च स्वरेस्वरे ॥ ५२ ॥

---

[1] मातृकायां यत्किञ्चित् ग्रन्थभागः पतित इति भाति ।

[2] मातृकायां हरिपालीयमूलग्रन्थे च पतितम् ।

चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः ।
द्वे द्वे निषादगान्धारौ त्रिस्त्रि ऋषभधैवतौ || ५३ ।

इति सप्तस्वरेषु श्रुतिसङ्ख्यालक्षणम् ।

एतासां श्रुतीनां जातिभेदाः रत्नाकरोक्ताः । अत्र नोक्ताः
अथ क्रमप्राप्तं रत्नाकरोक्त स्वरलक्षणं लक्ष्यते :—

श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः ।
पञ्चमो धैवतश्चाथ निषाद इति सप्त ते || ५४ ||

तेषां संज्ञाः स रि ग म प ध नीत्यपरा मताः ।

भारतीये

षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा || ५५ ||

पञ्चमोधैवतश्चैव निषादः सप्त वै स्वराः ।
चतुर्विधत्वमेतेषां विज्ञेयं श्रुतियोगतः || ५६ ||

हरिपालीये

संभवन्ति स्वरास्सप्त वीणायां गानसम्मताः ।
ते षड्जर्षभगान्धारमध्यपञ्चमधैवताः || ५७ ||

निषादश्चेऽत्यभिहिताः श्रुतिस्तेषु विभज्यते ।

इति सप्तस्वरोद्देशः ||

अथ रत्नाकरोक्तं स्वरलक्षणं लक्ष्यते :—

श्रुत्यनन्तरभावी यः स्निग्धो ऽनुरणनात्मकः || ५८ ||

स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ।

**एतत्स्वर वक्तृजन्तवः कथ्यन्ते :—**

मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः ॥ ५८ ॥

गजश्च सप्त षड्जादीन्क्रमादुच्चारयन्त्यमी ।

**इति शुद्धस्वराः सत्प ॥**

**अथ एतन्मतोक्तं विकृतस्वरलक्षणमुच्यते :—**

च्युतो ऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेत् ॥ ५९ ॥

साधारणे काकलीत्वे निषादस्य च दृश्यते ।
साधारणे श्रुतिं षाड्जीमृषभः संश्रितो यदा ॥ ६० ॥

चतुःश्रुतित्वमायाति तदैको विकृतिर्भवेत् ।
साधारणे त्रिश्रुतिः स्यादन्तरत्वे चतुश्रुतिः ॥ ६१ ॥

गान्धार इति तद्भेदौ द्वौ निःशङ्केन कीर्तितौ ।
मध्यमः षड्जवद्द्वेधाऽन्तरसाधारणाश्रयात् ॥ ६२ ॥

पञ्चमो मध्यमग्रामे त्रिश्रुतिः कैशिके पुनः ।
मध्यमस्य श्रुतिं प्राप्य चतुः श्रुतिरिति द्विधा ॥ ६३ ॥

धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ।
कैशिके काकलित्वे च निषादस्त्रिचतुश्रुतिः ॥ ६४ ॥

प्राप्नोति विकृतौ भेदौ द्वाविति द्वादश स्मृताः ।
ते शुद्धैः सप्तभिः सार्धं भवन्त्येकोन विंशतिः ॥ ६५ ॥

**इति विकृतस्वराः द्वादश ॥**

## अथ रत्नाकरे वादीत्यादिस्वराः कथ्यन्ते :—

चतुर्विधाः स्वरा वादी संवाद्यथ विवाद्यपि ।
अनुवादी च वादी तु प्रयोगे बहुलः स्वरः ॥ ६६ ॥

श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः ।
मिथः संवादिनौ तौ स्तो निगावन्यविवादिनौ ॥ ६७ ॥

रिधयोरेव वा स्यातां तौ तयोर्वा रिधावपि ।
शेषाणामनुवादित्वं वादी राजाऽत्र गीयते ॥ ६८ ॥

संवादीत्वनुसारित्वादस्यामात्योऽभिधीयते ।
विवादी विपरीतत्वाद्धीरैरुक्तो रिपूपमः ॥ ६९ ॥

नृपामात्यानुसारित्वादनुवादी तु भृत्यवत् ।

## अथ भारतीयोक्तं वादिस्वरादिलक्षणं कथ्यते :—

वादी चैवाथ संवादीत्वनुवादी विवाद्यपि ॥ ७० ॥

**वाक्यम्** :—तत्र यो यस्य यदांशस्तदा स तस्य वादी । ययोश्च नवक त्रयोदशके श्रुत्यन्तरे तावदन्यो संवादिनौ ॥

यथा—षड्जमध्यमौ षड्जपञ्चमौ ऋषभधैवतौ गान्धारनिषादाविति षड्जग्रामे । मध्यमग्रामेऽप्येवमेव, षड्जपञ्चमवर्ज्यं । पञ्चमर्षभयोश्चात्र संवाद इति ।

अत्र श्लोकाः :—

संवादो मध्यमग्रामे पञ्चमस्यर्षभस्य च ।
षड्जग्रामे च षड्जस्य संवादः पञ्चमस्य च ॥ ७१ ॥

विवादिनस्तु ते येषां द्विश्रुतिश्च समन्तरः ।

यथा—ऋषभगान्धारौ धैवत निषादौ । एवं संवादिविवादिषु स्थापितेषु शेषाः अनुवादि संज्ञकाः ।

यथा—षड्जस्य ऋषभगान्धार धैवत निषादाः । ऋषभस्य मध्यमपञ्चमनिषादाः । गान्धारस्यापि मध्यम पञ्चम धैवताः । मध्यमस्य धैवत पञ्चम निषादाः । पञ्चमस्य धैवत निषादौ । धैवतस्य ऋषभपञ्चममध्यमाः । षड्जग्रामे । मध्यमग्रामेऽपि मध्यमस्य पञ्चम धैवत निषादाः । पञ्चमस्य ऋषभ षड्जगान्धाराः । धैवतस्य षड्जर्षभ गान्धाराः । निषादस्य षड्जर्षभगान्धाराः ।[1]

तत्र बदनाद्वादी, संवदनात्संवादी, अनुवदनादनुवादीति । एतद्विवदनाद्विवादी । एतेषां स्वराणां न्यूनाधिकत्वन्तु तन्त्रयुपपादन दण्डक्रिया वै पुण्यादुपजायते इति स्वरविधानं चतुर्विधम् ।

हरिपालीये

एते स्वरा वादिसंवाद्यनुवादिविवादिनः ॥ ७२ ॥

चतुर्विधा भवन्त्यत्र निर्णयो रागगोचरः ।
स्वस्थाने भूयसा यस्तु दृश्यते वाद्यसौस्वरः ॥ ७३ ॥

स संवादी प्रसक्तं यो रागं जातु न भञ्जयेत् ।
रागच्छाया प्रस्तुतस्य स्वरस्यैवानुकारिणि ॥ ७४ ॥

यत्रान्यस्मिन् भवेद्दृश्यं सोऽनुवादी स्वरः स्मृतः ।
यः प्रशान्तस्य रागस्य भङ्गं कुर्याद्विवाद्यसौ ॥ ७५ ॥

---

[1] अयं भागः ग्रन्थकारेण नोद्धृतः ।

षड्जादयो निषादान्तौ यत्र सप्तस्वराः क्रमात् ।
गीयन्ते गीतकुशलैरुक्तं तद्वादिमण्डलम् ॥ ७६ ॥

भवेतां सङ्गतौ षड्जमध्यमौ धैवतर्षभौ ।
गान्धारनिषादौ च तथा मध्यमषड्जकौ ॥ ७७ ॥

तद्वत्पञ्चमषड्जौ च धैवतर्षभकौ तथा ।
यस्मिन्निषादगान्धारौ तत्तत्संवादिमण्डलम् ॥ ७८ ॥

षड्जर्षभौ तु दृश्येते तथा पञ्चमधैवतौ ।
षड्ज धैवतकौ पञ्चमर्षभौ यत्र सङ्गतौ ॥ ७९ ॥

कथितं गीतशास्त्रज्ञैर्मण्डलं चानुवादि तत् ।
षड्ज गान्धारकौ यत्र युक्तौ गान्धार पञ्चमौ ॥ ८० ॥

स्यातां मध्यमनिषादौ च मण्डलन्तु विवादिनः ।

**हरिपालीयोक्त वादिसंवाद्यनुवादि विवादि मण्डलं निरूपितम् एतत्स्वराणां कुलजात्यादयः कथ्यन्ते । रत्नाकरे :—**

गीर्वाणकुलसंभूताः षड्जगन्धारमध्यमाः ॥ ८१ ॥

पञ्चमः पितृवंशोत्थो रिधावृषिकुलोद्भवौ ।
निषादोऽसुरवंशोत्थो ब्राह्मणाः समपञ्चमाः ॥ ८२ ॥

रिधौ तु क्षत्रियौ ज्ञेयौ वैश्यजाती निगौ मतौ ।
शूद्रावन्तरकाकल्यौ स्वरौ वर्णास्त्विमे क्रमात् ॥ ८३ ॥

पद्माभः पिञ्जरः स्वर्णवर्णः कुन्दप्रभो ऽसितः ।
पीतः कर्बुर इत्येषां जन्मभूमीरथ ब्रुवे ॥ ८४ ॥

जम्बूशाककुशक्रौञ्चशाल्मली श्वेतनामसु ।
द्वीपेषु पुष्करे चैते जाताः षड्जादयः क्रमात् ॥ ८५ ॥

अथर्षयः :—

वह्निर्वेधाः शशाङ्कश्च लक्ष्मीकान्तश्च नारदः ।
ऋषयो ददृशुः पञ्च षड्जादींस्तुम्बुरुर्ध्वनी ॥ ८६ ॥

अथ देवताः :—

वह्निब्रह्मसरस्वत्यः शर्वश्रीशगणेश्वराः ।
सहस्रांशुरिति प्रोक्ताः क्रमात्षड्जादिदेवताः ॥ ८७ ॥

क्रमादनुष्टुब्गायत्री त्रिष्टुप्च बृहती ततः ।
पङ्क्तिरुष्णिक्च जगतीत्याहुः छन्दांसि सादिषु ॥ ८८ ॥

अथ विनियोगः :—

सरी वीरेऽद्भुते रौद्रे धो बीभत्से भयानके ।
कार्यौ गनी तु करुणे हास्यशृङ्गारयोर्मपौ ॥ ८९ ॥

**इति रत्नाकरोक्तः शुद्धस्वरविकृतस्वरलक्षणप्रपञ्चः ॥**

**अथ सङ्गीतसारोक्तः षड्जादिस्वरोत्पत्तिः कथ्यते :—**

नासाकण्ठउरस्तालुः जिह्वा सन्धिश्चसर्वतः ।
षडङ्गेभ्यश्च जातत्वात् षड्जश्च प्रथमस्वरः ॥ ९० ॥

कण्ठात्यो जायते षड्जः ऋषभो हृदये भवेत् ।
गान्धारस्त्वनुनासाख्यः उरस्थो मध्यमस्वरः ॥ ९१ ॥

उरसः शिरसः कण्ठात्सञ्जातः पञ्चमस्वरः ।
ललाटे धैवतो ज्ञेयो निषादस्सर्वसन्धिजः ॥ ९२ ॥

अमी देशाश्च सप्तानां कथिताः पूर्वसूरिभिः ।
तिथिवाराश्च नक्षत्रराशिवेलाऋषिस्तथा ॥ ९३ ॥

छाया मुखानि हस्ताश्च वर्णद्वीपकुलानि च ।
वाहनस्थानवंशाश्च ध्याननामानि जातयः ॥ ९४ ॥

श्रुतिकालउदात्ताद्या एवैते पञ्चविंशतिः ।[1]

## अथ स्वरध्यानानि[2] :—

आदौ षड्जस्वरस्य कथनं :

षण्मुखश्च चतुर्हस्तः पिनाकी भास्करोदये ॥ ९५ ॥

सपद्महस्तयुग्मश्च रक्तवर्णश्च कीर्तितः ।
कुलं सुपर्णजं जम्बूद्वीपं ब्रह्माधिदैवतम् ॥ ९६ ॥

वीररौद्राद्भुतरसाः गेया गाता च पावकः ।
मयूरो वाहनं त्वस्य स्वरोऽनुरणनात्मकः ॥ ९७ ॥

### इति षड्जः ॥

---

[1] मातृकायां यत्किञ्चिद्ग्रन्थभागः पतित इति भाति ।

[2] अत्रोद्धृतगान्धारमध्यमपञ्चमधैवतनिषादस्वरध्यानानि सुधाकलशविरचित-सङ्गीतोपनिषत्सारोद्धारस्थानीति किञ्चिद्भिन्नतरया भरतकोशे दर्शितानि ।

अथर्षभस्वरस्यापि किञ्चिद्रूपादि कथ्यते ।
एकवक्त्रश्चतुर्हस्तो हस्ताभ्यां कमले भवेत् ॥ ९८ ॥

नीलवर्णोऽपि साचिभ्रूः जातश्च ऋषभे कुले ।
अग्निश्च दैवतं शाकद्वीपं गाता च भूस्तथा ॥ ९९ ॥

रौद्रवीराद्भुतरसाः गेया स्युः वाहनं वृषः ।

इति ऋषभः ॥

गान्धारस्यैकवदनं गौरवर्णश्चतुर्भुजः ॥ १०० ॥

सवीणाकलशौ हस्तौ सपद्मवरदौ तथा ।
भारती दैवतं द्वीपः कुशो वंशस्सवर्णजः ॥ १०१ ॥

गाता चन्द्रो रसः शान्तो भवेन्मेषश्च वाहनः ।

इति गान्धारः ॥

शङ्करो दैवतो क्रौञ्चद्वीपो वंशस्सवर्णजः ॥ १०२ ॥

विष्णुर्गाता रसोहास्यः क्रौञ्चपक्षी च वाहनम् ।

इति मध्यमः ॥

पञ्चमस्त्वेकवदनः भिन्नवर्णश्च षट्करः ॥ १०३ ॥

वीणाकरद्वये पद्मकुम्भखट्वाङ्गशूलभाक् ।
चक्री तु दैवतं द्वीपः शाल्मलिः पितृवंशजः ॥ १०४ ॥

कोकिलो वाहनं गाता नारदश्चादिमो रसः ।

इति पञ्चमः ॥

धैवतः श्यामवर्णः स्यादेकवक्त्रश्चतुर्भुजः ॥ १०५ ॥

फलवीणापद्महस्तः युक्तस्तु वरदेन च ।
हेरम्बो दैवतं श्वेतद्वीपः स्यादहिजं कुलम् ॥ १०६ ॥

रसो भयानकं चाश्वो यानं गाता तु तुम्बुरुः ।

इति धैवतम् ॥

निषादो गजवक्त्रस्स्याच्चित्रवर्णश्चतुष्करः ॥ १०७ ॥

त्रिशूलपद्मपरशू बीजपूरैकभाक्करः ।
दैत्यवंशः कुलं भानुः देवो द्वीपन्तु पुष्करः ॥ १०८ ॥

गायकस्तुम्बुरुश्शान्तो रसः स्याद्गजवाहनः ।

इति निषादः ॥

सप्तस्वरानुगं लक्ष्म मया किञ्चित्प्रकाशितम् ॥ १०९ ॥

**इति सङ्गीतसारोक्तं सप्तस्वरलक्षणम् ॥**

**अथ रत्नाकरोक्तं ग्रामस्वरलक्षणं लक्ष्यते :—**

ग्रामः स्वरसमूहः स्यान्मूर्छनादेः समाश्रयः ।
तौ द्वौ धरातले तत्र स्यात्षड्जग्राम आदिमः ॥ ११० ॥

द्वितीयो मध्यमग्रामस्तयोर्लक्षणमुच्यते ।
षड्जग्रामः पञ्चमे स्वचतुर्थश्रुतिसंस्थिते ॥ १११ ॥

स्वोपान्त्यश्रुतिसंस्थे ऽस्मिन्मध्यमग्राम इष्यते ।
यद्वा धस्त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ॥ ११२ ॥

रिमयोः श्रुतिमेकैकां गान्धारश्चेत् समाश्रितः ।
पश्रुतिं धो निषादस्तु धश्रुतिं सश्रुतिं श्रितः[1] ॥ ११३ ॥

गान्धारग्राममाचष्टे तदा तं नारदोमुनिः ।
प्रवर्तते स्वर्गलोके ग्रामो ऽसौ न महीतले ॥ ११४ ॥

षड्जः प्रधानमादित्वादमात्याधिक्यतस्तथा ।
ग्रामे स्यादविलोपित्वान्मध्यमस्तु पुरःसरः ॥ ११५ ॥

एतत्कुलप्रसूतत्वाद्गान्धारो ऽप्यग्रणीर्दिवि ।
क्रमाद्ग्रामत्रये देवा ब्रह्मविष्णुमहेश्वराः ॥ ११६ ॥

हेमन्तग्रीष्मवर्षासु गातव्यास्ते यथाक्रमम् ।
पूर्वाह्णकाले मध्यान्हे ऽपराह्णे ऽभ्युदयार्थिभिः ॥ ११७ ॥

### इति रत्नाकरोक्तं ग्रामस्वरलक्षणम् ॥

### अथ भारतीयोक्तं ग्रामस्वरलक्षणम् :—

अथ द्वौ ग्रामौ—षड्जग्रामो मध्यमग्रामश्चेति । तत्राश्रिता द्वाविंशतिः श्रुतयः । तद्यथा—

तिस्रो द्वे चतस्रश्च चतस्रस्तिस्र एव च ।
द्वे चतस्रश्च षड्जाख्ये ग्रामे तु श्रुतिदर्शनम् ॥ ११८ ॥

मध्यमग्रामे तु श्रुत्यपकृष्टः पञ्चमः कार्यः । पञ्चमस्य श्रुत्युत्कर्षापकर्षाभ्यां मार्दवादायतत्वाद्वा यदन्तरं तत् प्रमाणश्रुतिदर्शनम् । तासामभिव्याख्यास्यामः :—

---

[1] मातृकायां पतितः ।

द्वे वीणे तुल्यप्रमाणे तन्त्र्युपपादनं दण्डमूर्छना समेकृत्वा षड्ज-ग्रामाश्रिते कार्ये। तयोरन्यतरां मध्यमग्रामिकीं कृत्वा पञ्चमस्यापकर्षे श्रुतिं तामेव पञ्चमवशात् षड्जग्रामिकीं कुर्यात्। एवं श्रुतिरपकृष्टा भवति। पुनरपि तद्वदेवापकर्षयेत्। गान्धारनिषादावितरस्यामृषभधैवतौ प्रवेक्ष्यतः द्विश्रुत्यभ्यधिकत्वात्। पुनरपि तद्वदेवापकर्षयेत्। धैवतर्षभावितरस्यां पञ्चमषड्जौ प्रवेक्ष्यतः त्रिश्रुत्यभ्यधिकत्वात्। तद्वत्पुनरपकृष्टायां तस्यां पञ्चममध्यमषड्जाः मध्यमगान्धारनिषादाः इतरस्यां प्रवेक्ष्यन्ति चतुश्रुत्यभ्यधिकत्वात्। एवमनेन श्रुतिदर्शनविधानेन द्विग्रामिकाः द्वाविंशतिः श्रुतयः प्रत्यवगन्तव्याः।

अत्र श्लोकाः :—

षड्जश्चतुश्रुतिर्ज्ञेय ऋषभस्त्रिश्रुतिः स्मृतः।
द्विश्रुतिश्चापि गान्धारो मध्यमश्च चतुश्रुतिः ॥ ११९ ॥

चतुश्रुतिः पञ्चमः स्यात्त्रिश्रुतिर्धैवतस्तथा।
द्विश्रुतिश्च निषादस्स्यात् षड्जग्रामे भवन्ति हि ॥ १२० ॥

**मध्यमग्रामे :—**

चतुश्रुतिस्तु विज्ञेयो मध्यमः पञ्चमः पुनः।
त्रिश्रुतिर्धैवतस्तु स्याच्चतुश्रुतिक एव च ॥ १२१ ॥

निषादषड्जौ विज्ञेयौ द्विचतुश्रुतिसंभवौ।
ऋषभस्त्रिश्रुतिश्च स्याद्गान्धारो द्वि[illegible]तिस्तथा ॥ १२२ ॥

## इति भारतीयोक्तं ग्रामस्वरलक्षणम् ॥

## अथ हरिपालीयोक्तं ग्रामलक्षणं लक्ष्यते :—

जातिश्रुतिस्वराणां यः समुदायः स उच्यते।
ग्रामः स तु द्विधा षड्जमध्यमोपपदो भवेत् ॥ १२३ ॥

## ग्रन्थान्तरे

यथा कुटुम्बिनस्सर्वे ह्येकीभूत्वा भवन्ति हि ।
तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते ॥ १२४ ॥

इति ग्रामस्वरलक्षणं निरूपितम् ॥

### अथ रत्नाकरोक्तं मूर्छनास्वरूपं निरूप्यते :—

क्रमात्स्वराणां सप्तानां आरोहश्चावरोहणम् ।
मूर्छनेत्युच्यते ग्रामद्वये ताः सप्त सप्त च ॥ १२५ ॥

षड्जे तूत्तरमन्द्रा ऽऽदौ रजनी चोत्तरायता ।
शुद्धषड्जा मत्सरीकृदश्वक्रान्ता ऽभिरुद्गता ॥ १२६ ॥

मध्यमे स्यात्तु सौवीरी हरिणाश्वा ततः परम् ।
स्यात्कलोपनता शुद्धमध्या मार्गी च पौरवी ॥ १२७ ॥

हृष्यकेत्यथ तासां तु लक्षणं प्रतिपाद्यते ।
मध्यस्थानस्थषड्जेन मूर्छना ऽऽरभ्यते ऽग्रिमा ॥ १२८ ॥

अधस्तनैर्निषादाद्यैः षडन्या मूर्छनाः क्रमात् ।
मध्यमध्यममारभ्य सौवीरी मूर्छना भवेत् ॥ १२९ ॥

षडन्यास्तधोऽधःस्थस्वरानारभ्य तु क्रमात् ।
षड्जस्थानस्थितैर्न्याद्यै रजन्याद्याः परे विदुः ॥ १३० ॥

हरिणाश्वादिका गाद्यैः मध्यमस्थानसंस्थितैः ।
षड्जादीन्मध्यमादींश्च तदूर्ध्वं सारयेत्क्रमात् ॥ १३१ ॥

चतुर्धा ताः पृथक्शुद्धाः काकलीकलितास्तथा ।
सान्तरास्तद्द्वयोपेताः षट्पञ्चाशदीरिताः ॥ १३२ ॥

श्रुतिद्वयं चेत्षड्जस्य निषादः संश्रयेत्तदा ।
स काकली मध्यमस्य गान्धारस्त्वन्तरः स्वरः ॥ १३३ ॥

यस्यां यावतिथौ षड्जमध्यमौ ग्रामयोः क्रमात् ।
मूर्छना तावतिथ्येव सा निःशङ्केन कीर्तिता ॥ १३४ ॥

प्रथमादिस्वरारम्भादेकैका सप्तधा भवेत् ।
तासूच्चार्यान्त्यस्वरांस्तान्पूर्वानुच्चारयेत्क्रमात ॥ १३५ ॥

ते क्रमास्तेषु सङ्ख्याः स्युः द्विनवत्या शतत्रयम् ।
यक्षरक्षोनारदाब्जभवनागाश्विपाशिनः ॥ १३६ ॥

षड्जग्रामे मूर्छनानामेताः स्युर्देवताः क्रमात् ।
[ब्रह्मेन्द्रवायुगन्धर्वसिद्धद्रुहिणमानवः ॥ १३७ ॥

स्युरिमा मध्यमग्राममूर्छनादेवताः क्रमात् ।][1]
तासामन्यानि नामानि नारदो मुनिरब्रवीत् ॥ १३८ ॥

मूर्छनोत्तरवर्णा ऽऽद्या षड्जग्रामे ऽभिरुद्गता ।
अश्वक्रान्ता च सौवीरी हृष्यका चोत्तरायता ॥ १३९ ॥

रजनीति समाख्याता ऋषीणां सप्तमूर्छनाः ।
आप्यायनी विश्वहृदा चन्द्रा हेमा कपर्दिनी ॥ १४० ॥

---

[1] श्लोकोऽयं मातृकायां पतितः ।

मैत्री चन्द्रमती पित्र्या मध्यमे मूर्छना इमाः ।
नन्दा विशाला सुमुखी चित्रा चित्रवती मुखा ॥ १४१ ॥

आलापा चेति गान्धारग्रामे स्युः सप्त मूर्छनाः ।
ताश्च स्वर्गे प्रयोक्तव्या विशेषात्तेन नोदिताः ॥ १४२ ॥

**भारतीये द्विग्रामिक्यश्चतुर्दशमूर्छनाः यथा :—**

आद्या ह्युत्तरमन्द्रा स्याद्रजनी चोत्तरायता ।
चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरीकृता ॥ १४३ ॥

अश्वक्रान्ता तु षष्ठी स्यात्सप्तमी चाभिरुद्गता ।

आसां षड्जनिषादधैवतपञ्चममध्यमगान्धारर्षभाः षड्जग्रामाश्रिता ज्ञेयाः सप्त मूर्छनाः ।

मध्यमग्रामे :—

सौवीरी हरिणाश्वा च स्यात्कलोपनता तथा ॥ १४४ ॥

शुद्धमध्या तथा चैव मार्गवी पौरवी तथा ।
हृष्यका चेति विज्ञेया सप्तमी द्विजसत्तमाः ॥ १४५ ॥

मध्यमग्रामजा ह्येता विज्ञेयाः सप्त मूर्छनाः ।

असां मध्यमगान्धारर्षभषड्जनिषादधैवतपञ्चमाः आद्यस्वराः ।

एवमेताः क्रमयुताः पूर्णाः षाडवसंश्रिताः ॥ १४६ ॥

साधारणकृताश्चेति विज्ञेयाः सप्त मूर्छनाः ।
क्रमयुक्ताः स्वराः सप्त मूर्छनास्त्वभिसंज्ञिकाः ॥ १४७ ॥

षट्पञ्चकस्वरास्तासां षाडवौडुविताः स्मृताः ।
साधारणकृताश्चैव काकलीसमलङ्कृताः ॥ १४८ ॥

अन्तरस्वरसंयुक्ता मूर्छनाः ग्रामयोर्द्वयोः ।

द्विविधैः मूर्छनासिद्धिः । तत्र द्विश्रुतिप्रकर्षाद्धैवतीकृते गान्धारे मूर्छनाग्रामयोरन्यत्वं । तद्वंशाश्च मध्यमादयो यथासङ्ख्येन निषादत्वं प्रतिपद्यन्ते, षड्जग्रामे । मध्यमग्रामे तु चतुश्रुतिकमन्तरं पञ्चमधैवतयोस्तद्वशाद्गान्धारोत्कर्षाच्चतुश्रुतिकमन्तरं भवति । शेषाश्चापि मध्यमपञ्चमधैवतनिषादषड्जर्षभाः निषादषड्जर्षभगान्धारमध्यमपञ्चमत्वं प्राप्नुवन्ति चतुश्रुत्यन्तरत्वात् ।

## हरिपालीये

स्वराणामपि सप्तानां मन्द्रादिक्रमयोगतः ॥ १४९ ॥

भवेदारोहावरोहक्रमो यः स तु मूर्छना ।
सप्त सप्त भवन्त्येताः मूर्छनास्त्वेकविंशतिः ॥ १५० ॥

श्रुतेर्मार्दवमेकस्या मूर्छनेत्याह कोहलः ।[1]

## तुम्बुरुः[2]

गायतां शृण्वतां चापि भवेद्रागामृतं हृदे ॥ १५१ ॥

मनसो मज्जनं याति मूर्छनेत्याह कोहलः ।
नामानि मूर्छनानान्तु कथितानि मनीषिभिः ॥ १५२ ॥

---

[1] 'श्रुतेर्मर्दनमेवस्यान्मूर्छनेत्याह तुम्बुरु' रिति हरिपालीयमूलमातृकायां पाठान्तरम् ।
[2] अयं भागः अनेनैव शीर्षकेणसह हरिपालीयमूलमातृकायां दृश्यते ।

एतासामेकरूपत्वात्तद्वर्णनमनादृतम् ।

इति मूर्छनालक्षणम् ॥

**सङ्गीतसारोक्तः मूर्छनानामुद्देशः कथ्यते :—**

मूर्छनानामथैतासामिष्यते ऽभिधा तथा ॥ १५३ ॥

बोधालल्लासमाधानि प्यारण्ये चापराजिता । (?)
रिगलन्ती संयमनि मन्द्रा च भ्रामिता तथा ॥ १५४ ॥

द्राविताभ्धनिता चावसर्पिणी धृतिशेखरा ।
रमणी शोभिता नादा तथा विभरिता मता ॥ १५५ ॥

नादत्त कौशिता चैव तथास्याभ्यन्तचारिणी ।
रङ्गिणी नादस्रष्टा च वादिता मूर्छनाभिधा ॥ १५६ ॥

स्वरेषु सप्तसु ज्ञेयास्तिस्रस्तिस्रश्च मूर्छनाः ।

**अथ रत्नाकरोक्तं तानलक्षणं लक्ष्यते :—**

(तानाः स्युर्मूर्छनाः शुद्धाः)[1] षाडवौडुविकीकृताः ॥ १५७ ॥

षड्जगाः सप्त हीनाश्चेत्क्रमात्सरिपससमैः ।
तथाष्टाविंशतिस्तानाः मध्यमे सरिगोज्झिताः ॥ १५८ ॥

सप्त क्रमाद्यदा तानाः स्युस्तदा त्वेकविंशतिः ।
एते चैकोनपञ्चाशदुभये षाडवा मताः ॥ १५९ ॥

---

[1] मातृकायां पतितः ।

सपाभ्यां द्विश्रुतिभ्याञ्च रिपाभ्यां सप्त वर्जिताः ।
षड्जग्रामे पृथक्तानाः एकविंशतिरौडुवाः ॥ १६० ॥

रिधाभ्यां द्विश्रुतिभ्याञ्च मध्यमग्रामगास्तु ते ।
हीनाश्चतुर्दशैव स्युः पञ्चत्रिंशत्तु ते युताः ॥ १६१ ॥

सर्वे चतुरशीतिः स्युर्मिलिताः षाडवौडुवाः ।
असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारितस्वराः ॥ १६२ ॥

## अथ तदुक्तं कूटतानलक्षणं कथ्यते :—

मूर्छनाः कूटतानाः स्युः तत्सङ्ख्यामभिदध्महे ।
पूर्णाः पञ्च सहस्राणि चत्वारिंशद्युतानि च ॥ १६३ ॥

एकैकस्यां मूर्छनायां कूटतानाः सह क्रमैः ।
षट्पञ्चाशन्मूर्छनास्थाः पूर्णाः कूटास्तु योजिताः ॥ १६४ ॥

लक्षद्वयं सहस्राणि द्व्यशीतिर्द्वे शते तथा ।
चत्वरिंशच्च सङ्ख्याता अथाऽपूर्णान् प्रचक्ष्महे ॥ १६५ ॥

एकैकान्त्यान्त्यविरहात् भेदाः षट् षट्स्वरादयः ।
एकस्वरो ऽत्र निर्भेदो ऽप्युक्तो नष्टादिसिद्धये ॥ १६६ ॥

क्रमाश्चाकूटतानत्वे ऽप्युक्तास्तेषूपयोगिनः ।
स्युः षाडवानां विंशत्या सह सप्त शतानि तु ॥ १६७ ॥

औडुवानान्तु विंशत्या सहितं शतमिष्यते ।
चतुःस्वराणां कूटानां चतुर्विंशतिरीरिताः ॥ १६८ ॥

त्रिस्वराः षट् द्विस्वरौ द्रावेकस्त्वेकस्वरो मतः ।
आर्चिको गाथिकश्चाथ सामिको ऽथ स्वरान्तरः ॥ १६९ ॥

एकस्वरादितानानां चतुर्णामभिधा इमाः ।
उक्ताः शुद्धादिभेदेन निगयुक्ताश्चतुर्विधाः ॥ १७० ॥

तयोरेकैकहीनास्तु द्वेधा मूलक्रमा मताः ।
षड्जाद्यौ मध्यमाद्यौ च चत्वारः स्युर्द्विधा द्विधा ॥ १७१ ॥

चतुर्धा ऽन्ये दशेत्यष्टाचत्वारिंशदमी क्रमाः ।
सविंशतिः सप्तशती प्रागुक्तगणितक्रमैः ॥ १७२ ॥

चतुस्त्रिंशत्सहस्राणि षष्ट्या पञ्च शतानि च ।
इति षाडवसङ्ख्या स्यादथ पञ्चस्वरास्त्वमी ॥ १७३ ॥

गाद्यौ धाद्यौ निषादाद्यौ चतुर्भेदाः षडौडुवाः ।
अष्टावन्ये द्विधेत्येवं चत्वारिंशदमी क्रमाः ॥ १७४ ॥

सविंशतौ शते तैश्च गुणिते ऽष्टौ शतानि तु ।
चत्वारि च सहस्राणि सङ्ख्या पञ्चस्वरेष्विति ॥ १७५ ॥

चतुःस्वरेषु न्याद्यौ द्वौ चतुर्धा द्वादशापरे ।
[क्रमा द्विधेति द्वात्रिंशच्चतुर्विंशतिताडिता ॥ १७६ ॥

शतानि सप्ताष्टषष्ट्या स्याच्चतुःस्वरसम्मितिः ।
त्रिस्वरेषु तु माद्यौ द्वावभेदौ द्वादशापरे][1] ॥ १७७ ॥

---

[1] अयं सार्धश्लोकः मातृकायां पतितः ।

द्विधा षड्विंशतिरिति क्रमास्ते षड्भिराहता ।
षट्पञ्चाशच्छतञ्च स्युर्द्विस्वरेषु पुनर्द्विधा ॥ १७८ ॥

रिगधन्यादयो ऽष्टौ स्युः शुद्धाः षडितरेक्रमाः ।
द्वाविंशतिस्ते तु चतुश्चत्वारिंशद् द्विताडिता ॥ १७९ ॥

एकस्वरास्त्वभेदत्वान्मौला एव चतुर्दश ।
षड्जादेः शुद्धमध्याया भेदकं पञ्चमं विना ॥ १८० ॥

चतुःस्वरे क्रमद्वन्द्वे ऽष्टाचत्वारिंशदीरिताः ।
तानास्त्रिस्वरयोस्त्वेते द्वादश द्विस्वरे द्वयम् ॥ १८१ ॥

एक एकस्वरस्ते त्रिषष्टिरौत्तरमन्द्रकैः ।
पुनरुक्ता मतास्तानैः न्यादिमार्गीक्रमाः पुनः ॥ १८२ ॥

पञ्चस्वरा ये चत्वारस्तत्तानानां चतुःशतम् ।
अशीत्यभ्यधिका चातुःस्वरी षण्णवतिर्भवेत् ॥ १८३ ॥

द्वादश त्रिस्वरद्वन्द्वे चत्वारो द्विस्वरद्वये ।
एक एकस्वरस्तानस्तेषां पञ्चशती त्वियम् ॥ १८४ ॥

त्रिनवत्या युता तानैरभिन्ना रजनीगतैः ।
धैवतादेस्तु पौरव्याश्चत्वारः षट्स्वराः क्रमात् ॥ १८५ ॥

तत्तानानान्तु साशीतिः शताष्टाविंशतिर्मता ।
औडुवानां चतुर्णां प्रागुक्ता सङ्ख्या चतुःस्वरौ ॥ १८६ ॥

त्रिस्वरो द्विस्वरौ चैकस्वरः प्रागुक्तसङ्ख्यकाः ।
पञ्चविंशतिसंयुक्ताश्चतुस्त्रिंशच्छती त्वियम् ॥ १८७ ॥

तानानां सदृशाकारा स्यात्तानैरौत्तरायतैः ।
इत्येकाशीतिसंयुक्तं सहस्राणां चतुष्टयम् ॥ १८८ ॥

तानानां पुनरुक्तानां पूर्णापूर्णैः सह क्रमैः ।
अपनीयेत चेदेषा कूटतानमितिर्भवेत् ॥ १८९ ॥

लक्षत्रयं सप्तदश सहस्राणि शतानि च ।
नवत्रिंशद्युतानीति ज्ञानोपायो ऽत्र कथ्यते ॥ १९० ॥

अथ खण्डमेरुलक्षणं लक्ष्यते :—

अङ्कानेकादि सप्तान्तानूर्ध्वमूर्ध्वं लिखेत्क्रमात् ।
हते पूर्वेण पूर्वेण तेषु चाङ्के परे परे ॥ १९१ ॥

एकस्वरादिसङ्ख्या स्यात्क्रमेण प्रतिमूर्छनम् ।
क्रमं न्यस्य स्वरः स्थाप्यः पूर्वः पूर्वः परादधः ॥ १९२ ॥

स चेदुपरि तत्पूर्वः पुरस्तूपरिवर्तिनः ।
मूलक्रमक्रमात्पृष्ठे शेषाः प्रस्तार ईदृशः ॥ १९३ ॥

सप्ताद्येकान्तकोष्ठानामधो ऽधः सप्त पङ्क्तयः ।
तास्वाद्यायामाद्यकोष्ठे लिखेदेकं परेषु खम् ॥ १९४ ॥

वेद्यतानस्वरमितान्न्यस्येत्तेष्वेव लोष्टकान् ।
प्राक्पङ्क्त्यन्त्याङ्कसंयोगमूर्ध्वाधःस्थितपङ्क्तिषु ॥ १९५ ॥

शून्यादधो लिखेदेकं तं चाधो ऽधः स्वकोष्ठकान् ।
कोष्ठसङ्ख्यागुणं न्यस्येत् खण्डमेरुरयं मतः ॥ १९६ ॥

| स | रि | ग | म | प | ध | नि |
|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० |
| | १ | २ | ६ | २४ | १२० | ७२० |
| | | ४ | १२ | ४८ | २४० | १४४० |
| | | | १८ | ७२ | ३६० | २१६० |
| | | | | ९६ | ४८० | २८८० |
| | | | | | ६०० | ३६०० |
| | | | | | | ४३२० |

इति खण्डमेरुलक्षणम् ॥

**अथोद्दिष्टं निगद्यते :—**

स्वरान्मूलक्रमस्यान्त्यात्पूर्वं यावतिथः स्वरः ।
उद्दिष्टान्त्यस्तावतिथे कोष्ठे ऽधो लोष्टकं क्षिपेत् ॥ १९७ ॥

लोष्टचालनमन्त्यात्स्यात्त्यक्त्वा लब्धं क्रमो भवेत् ।
लोष्टाक्रान्ताङ्कसंयोगात् उद्दिष्टस्य मितिर्भवेत् ॥ १९८ ॥

**अथ नष्टं लक्ष्यते :—**

यैरङ्कैर्नष्टसङ्ख्या स्यान्मौलैकाङ्कसमन्वितैः ।
तेषु लोष्टान् क्षिपेन्मौले लोष्टस्थानमितं भवेत् ॥ १९९ ॥

नष्टतानस्वरस्थानं ततो यावतिथे पदे ।
अधःक्रमादस्ति लोष्टः स्वरस्तावतिथो भवेत् ॥ २०० ॥

क्रमान्तिमस्वरात्पूर्वो लब्धस्यागादि पूर्ववत् ।
तानस्वरमितोर्ध्वाधःपङ्क्तिगान्त्याङ्कमिश्रणात् ॥ २०१ ॥

एकस्वरादि तानानां सङ्ख्या सञ्जायते क्रमात् ।

**एतत्तानानां नामधेयानि सङ्गीतरत्नाकरे द्रष्टव्यानि ॥**

**इति रत्नाकरोक्तं तानस्वरूपं निरूपितम् ॥**

**अथ भारतीयोक्तं तानस्वरूपं निरूपितम् :—**

तत्र मूर्छनाश्रयास्तानाश्चतुरशीतिः । तत्र एकोनपञ्चाशत्षट्स्वराः । पञ्चत्रिंशत्पञ्चस्वराः । लक्षणन्तु स्वराणां षाडवानां सप्तविधम् यथा —

षड्जर्षभनिषादपञ्चमहीनाश्चत्वारास्तानाः षड्जग्रामे । मध्यमग्रामे तु षड्जर्षभगान्धारहीनास्त्रयस्तानाः । एवमेतेऽपि षाडवास्तु मूर्छनासु क्रियमाणाः भवन्त्येकोनपञ्चाशत्तानाः ।

पञ्चस्वराणान्तु पञ्चविधमेवलक्षणं यथा—

षड्जपञ्चमहीन ऋषभपञ्चमहीनो गान्धारनिषादहीन इति त्रयस्तानाः षड्जग्रामे । मध्यमग्रामे तु धैवतऋषभहीनो निषादगान्धारहीन इति इमौ द्वौ तानौ ।

सर्वासु मूर्छनासु क्रियमाणास्तानाः पञ्चत्रिंशद्भवन्ति । [षड्जग्रामे पञ्चविंशतिर्मध्यमग्रामे चतुर्दश एवमेते एकत्र गम्यमानाश्चतुरशीतिर्भवन्ति ।][1] द्विधा तानक्रियाः तन्त्र्यां—प्रवेशो निग्रहश्च । तत्र प्रवेशोनाम आधारस्वर-

---

[1] अयमंशः मातृकायां पतितः ।

प्रकर्षादुत्तरमार्दवाच्च । निग्रहः संस्पर्शः । मध्यस्वरसंस्पर्शः । मध्यमस्वरेण तु वैणेन मूर्छनानिर्देशः कार्यः । अनाश्रितत्वान्मध्यस्वरस्य निग्रहः प्रवेशो वा प्रयोक्तृश्रोतृसुखार्थं तानमूर्छनातत्त्वम् । प्रयोजन-दुःख (?-मपि) स्थानप्राप्तिः । स्थानन्तु त्रिविधम् । पूर्वोक्तं लक्षणं काकुविधाने ।

इति भारतीयोक्तं तानस्वरूपं निरूपितम् ॥

हरिपालीये

आरोहक्रम एवैतत्तानमित्यभिधीयते ॥ २०२ ॥

वक्ष्यमाणस्य पूर्णादेः क्रिया तस्यक्रमेण तु ।
षट्कस्यैकैकशस्तानाः चतुर्दश भवन्ति यत् ॥ २०३ ॥

तस्मान्मिलित्वा तानानामशीतिश्चतुरुत्तरा ।
[विन (?यज्ञ)नामाः परिभिधः यान्युक्तानि हतानि तु ॥ २०४ ॥
नोक्तानि हरिपालेन प्रयोजनमपश्यता ।][1]

सङ्गीतसारे

तेन्नयोर्वर्णयोर्बोधः (?–र्योगात्) तेन्नाः सप्त संमताः ॥ २०५ ॥

सञ्जायन्ते क्रमात्तानाः सप्त सप्तस्वरे पुनः ।
पुरुषाकृतयो नानावक्त्राश्चित्रवपुर्भृतः ॥ २०६ ॥

इति तानस्वरूपं निरूपितम् ॥

---

[1] अयं श्लोकः मातृकायां पतितः ।

**अथ रत्नाकरोक्तं स्वरसाधारणलक्षणं लक्ष्यते :—**

साधारणं भवेद् द्वेधा स्वरजातिविशेषणात् ।
स्वरसाधारणं तत्र चतुर्धा परिकीर्तितम् ॥ २०७ ॥

काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात् ।
साधारणः काकली हि भवेत्षड्जनिषादयोः ॥ २०८ ॥

साधारण्यमतस्तस्य यत्तत्साधारणं विदुः ।
अन्तरस्यापि गमयोरेवं साधारणं मतम् ॥ २०९ ॥

प्रयोज्यौ षड्जमुच्चार्य काकलीधैवतौ क्रमात् ।
एवं मध्यममुच्चार्य प्रयुञ्जीतान्तरर्षभौ ॥ २१० ॥

षड्जकाकलिनौ यद्वोच्चार्य षड्जं पुनर्भवेत् ।
[तत्परान्यतमं चैवं मध्यमं चान्तरस्वरम् ॥ २११ ॥

प्रयुज्य मध्यमो ग्राह्यस्तत्परान्यतमो ऽथ वा ।
अल्पप्रयोगः सर्वत्र काकली चान्तरः स्वरः ॥ २१२ ॥

निषादो यदि षड्जस्य श्रुतिमाद्यां समाश्रयेत् ।
ऋषभस्त्वन्तिमां प्रोक्तं षड्जसाधारणं तदा ॥ २१३ ॥

मध्यमस्यापि गपयोरेवं साधारणं मतम् ।][1]
साधारणं मध्यमस्य मध्यमग्रामगं ध्रुवम् ॥ २१४ ॥

साधारणे कैशिके ते केशाग्रवदणुत्वतः ।
ते एव कैश्चिदुच्येते ग्रामसाधारणे बुधैः ॥ २१५ ॥

---

[1] इदं श्लोकत्रयं ग्रन्थकृता नोद्धृतम् ।

एकग्रामोद्भवास्वेकांशासु जातिषु यद्भवेत् ।
समानं गानमार्यास्तज्जातिसाधारणं विदुः ॥ २१६ ॥
जातिसाधारणं केचिद्रागानेव प्रचक्षते ।

**भारतीयोक्तं साधारणमिदानीं वक्ष्यामः :—**

साधारणंनाम अन्तरस्वरता । कस्मात् ? द्वयोरन्तरे यद्भवति तत्साधारणम् । यथा—ऋत्वन्तरे छायासु भवति शीतं प्रस्वेदो भवति चातपस्थस्य । न च नागतो वसन्तः । न च निःशेषः शिशिरकालः ।

इति कालसाधारणम् ॥

तत्र द्वेधा साधारणं—स्वरसाधारणं जातिसाधारणञ्चेति । स्वरसाधारणं काकल्यन्तरस्वरौ । तत्र द्विश्रुतिप्रकर्षान्निषादः काकलीसंज्ञः । न निषादो न षड्जः । द्वाभ्यां प्राप्तो व्यक्तत्वात् साधारणत्वं प्रतिपद्यते । एवं गान्धारोऽप्यन्तरस्वरसंज्ञः न गान्धारो न मध्यमः । तयोरन्तरस्वरत्वात् । अत एव स्वरसाधारणम् ।

जातिसाधारणमेकांशानां जात्योर्वा अन्यस्मिन्ग्रामे प्रत्यङ्गदर्शनम् । संस्मरणावगमात् । तत्र स्वरसाधारणं द्विविधं द्वैग्रामिक्यं । कस्मात् ? षड्जग्रामे षड्जसाधारणम्, मध्यमग्रामे मध्यमसाधारणम् । साधारणो ऽत्र स्वरविशेषः । अस्य तु प्रयोगसौक्ष्म्यात् कैशिकमिति नाम निष्पद्यते । अत्र चाप्तोपदेशसिद्धो निषादः काकलीसंज्ञो भवति । द्विश्रुत्यभ्यधिकत्वात् कलत्वाच्च काकलीसंज्ञः । को दृष्टान्त इति । अत्रोच्यते—यथा षण्णां रसानां मध्ये लवणः क्षारसंज्ञा । गान्धारश्चान्तरो भवति । अस्याल्पनिषादगान्धारासु जातिषु प्रयोगः ।

अत्र श्लोकाः —

अन्तरस्वरसंयोगो नित्यमारोहि संश्रयः ॥ २१७ ॥

कार्यस्त्वल्पविशेषेण नावरोहि कदाचन ।
क्रियमाणोऽवरोही स्यात् अल्पो वा यदि वा बहुः ॥ २१८ ॥

जातिं रागं श्रुतिञ्चैव नाशयेत्वन्तरस्वरः ।

## हरिपालीये

काकली (? साधारणा) तु द्विधा स्वरतन्त्रविशेषणात् ॥ २१९ ॥

जातिसाधारणा त्वेका स्वरसाधारणा ऽपरा ।
जात्यन्तरस्य सादृश्यात् जातिसाधारणा भवेत् ॥ २२० ॥

द्विश्रुत्युत्कर्षणादेव स्वरसाधरणा भवेत् ।

## इति स्वरसाधारणलक्षणम् ॥

**अथ क्रमप्राप्तं रत्नाकरोक्तं वर्णलक्षणं लक्ष्यते :—**

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ॥ २२१ ॥

स्थाय्यारोह्यवरोही च सञ्चारीत्यथ लक्षणम् ।
स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ॥ २२२ ॥

स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ।
एतत्सम्मिश्रणाद्वर्णः सञ्चारी परिकीर्तितः ॥ २२३ ॥

## भारतीये

अत ऊर्ध्वं प्रवक्ष्यामि वर्णानामपि लक्षणम् ।
आरोही चावरोही च स्थायी सञ्चार्यथापि च ॥ २२४ ॥

वर्णाश्चत्वार एवैते ह्यलङ्कारास्तदाश्रयाः ।
आरोहन्ति स्वरा यत्र चारोही स तु संज्ञतः ॥ २२५ ॥[1]

यत्र चैवावरोहन्ति सो ऽवरोहीति भण्यते ।
स्थिताः स्वराः समा यत्र स्थायीवर्णः स उच्यते ॥ २२६ ॥

सञ्चरन्ति स्वरा यत्र सञ्चारी परिकीर्तितः ।
शारीरस्वरसंभूतास्त्रिस्थानगुणगोचराः ॥ २२७ ॥

चत्वारो लक्षणोपेताः वर्णाह्येते प्रकीर्तिताः ।
इदं लक्षणसंयुक्तं यदा वर्णो ऽनुकर्षति ॥ २२८ ॥

तदा वर्णस्य निष्पत्तिः विज्ञेया स्वरसम्भवाः ।
एते वर्णास्तु विज्ञेयाश्चत्वारो गीतयोजकैः ॥ २२९ ॥

एतानेवाश्रितान् भूयो ह्यलङ्कारान्निबोधत ।

हरिपालीये

चतुर्णामथ वर्णानां उद्देशः क्रियते ऽधुना ॥ २३० ॥

स्थायिसञ्चारिणौ स्यातां तथाऽरोह्यवरोहिणौ ।
स्वरेणैकेन यद्गेयं स स्थायीत्यभिधीयते ॥ २३१ ॥

स्वरसञ्चारगानेन सञ्चारीति समीर्यते ।
स्वराणामपि सप्तानां आरोहादवरोहतः ॥ २३२ ॥

आरोही चावरोही चेत्युच्येते द्वाविमौ क्रमात् ।
वर्णाश्रयास्त्वलङ्काराः सम्भवन्ति त्रयोदश ॥ २३३ ॥

**इति वर्णलक्षणं निगदितम् ॥**

---

[1] मातृकायां अत्र श्लोकसङ्ख्यायां विंशतिसङ्ख्या पुनः परिगणिता ।

अथ रत्नाकरोक्तालङ्कारलक्षणं निगद्यते :—

विशिष्टं वर्णसन्दर्भमलङ्कारं प्रचक्षते ।
तस्य भेदा बहुविधास्तत्र स्थायिगतान्ब्रुवे ॥ २३४ ॥

येषामाद्यन्तयोरेकः स्वरस्ते स्थायिवर्णगाः ।
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्तसंज्ञितः ॥ २३५ ॥

ततः प्रसन्नमध्यः स्यात्पञ्चमः क्रमरेचितः ।
प्रस्तारो ऽथ प्रसादः स्यात्सप्तैते स्थायिनि स्थिताः ॥ २३६ ॥

इति स्थायीनामुद्देशः ॥

स्यातां विस्तीर्णनिष्कर्षौ बिन्दुरत्युच्चयो ऽपरः ।
हसितप्रेङ्खिताक्षिप्तसन्धिप्रच्छादनास्तथा ॥ २३७ ॥

उद्गीतोद्वाहितौ तद्वत्त्रिवर्णो वेणुरित्यमी ।
द्वादशारोहिवर्णस्यालङ्काराः परिकीर्तिताः ॥ २३८ ॥

इत्यारोहिवर्णोद्देशः ॥

अवरोहक्रमादेते द्वादशाप्यवरोहिणि ।

इत्यवरोह्यलङ्कारोद्देशः ॥

मन्द्रादिर्मन्द्रमध्यश्च मन्द्रान्तः स्यात्ततः परम् ॥ २३९ ॥

प्रस्तारश्च प्रसादो ऽथ व्यावृत्तस्खलितावपि ।
परिवर्ताक्षेपबिन्दूद्वाहितोर्मिसमास्तथा ॥ २४० ॥

प्रेङ्खनिष्कूजितश्येनक्रमोद्घट्टितरञ्जिताः ।
सन्निवृत्तप्रवृत्तो ऽथ वेणुश्च ललितस्वरः ॥ २४१ ॥

हुङ्कारो ह्लादमानश्च ततः स्यादवलोकितः ।
स्युः सञ्चारिण्यलङ्काराः पञ्चविंशतिरित्यमी ॥ २४२ ॥

इति सञ्चार्यलङ्कारोद्देशः ॥

अन्ये ऽपि सप्तालङ्कारा गीतज्ञैरुपदर्शिताः ।
तारमन्द्रप्रसन्नश्च मन्द्रतारप्रसन्नकः ॥ २४३ ॥

आवर्तकः संप्रदानो विधूतो ऽप्युपलोलकः ।
उल्लासितश्चेति तेषामधुना लक्ष्म कथ्यते ॥ २४४ ॥

इति अन्योक्तसप्तालङ्कारोद्देशः ॥

भारतीये

प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा क्रमरेचित एव च ॥ २४५ ॥

प्रस्तारश्च प्रसादश्च सप्तैते स्थायिवर्णगाः ।
अथ सञ्चारिणो भूयः कीर्त्यमानान्निबोधत ॥ २४६ ॥

मन्द्रस्तथा प्रसन्नादि प्रेङ्खितो बिन्दुरेवच ।
सन्निवृत्तप्रवृत्तश्च रेचितः कम्पितः समः ॥ २४७ ॥

कुहरश्चैव वेणुश्च रञ्जितो ऽप्यवलोकितः ।
आवर्तितपरावृत्तौ सञ्चारिणि चतुर्दश ॥ २४८ ॥

निष्कूजितस्सहुङ्कारो हसितो बिन्दुरेव च ।
प्रेङ्खोलितस्तथाक्षिप्तो विस्तीर्णोद्धट्टितस्तथा ॥ २४९ ॥

ह्रादमानस्संप्रदानः सन्धिप्रच्छादनस्तथा ।
प्रसन्नादिः प्रसन्नान्त इत्यारोहे त्रयोदश ॥ २५० ॥

विधूतो गात्रवर्णश्च उद्गीतः पुनरेव च ।
उद्वाहितस्तथा वेणुः पञ्चैते त्ववरोहिणः ॥ २५१ ॥

सवर्णास्सपदा ज्ञेया अलङ्कारास्त्विमे तथा ।
सनियोज्या ध्रुवान्त्ये ते यतिवर्णप्रकर्षणात् ॥ २५२ ॥

नातिवर्णप्रकर्षस्तु ध्रुवाणां संप्रकीर्तितः ।
तत्र श्येनो ऽथवा बिन्दुर्ये चान्ये ऽपि प्रदक्षिणः ॥ २५३ ॥

ते ध्रुवाणां प्रयोगेषु न तु कार्याः प्रयोक्तृभिः ।
यस्मादर्थानुरूपाभिः ध्रुवाकार्यार्थदर्शिता ॥ २५४ ॥

वर्णानान्तु परं कार्यं कृशत्वञ्च ध्रुवाश्रयम् ।
ये ऽत्र प्रयोगं गच्छन्ति तांश्च वर्णान्निबोधत ॥ २५५ ॥

प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा बिन्दुः कम्पितरेचितौ ॥ २५६ ॥

तारश्चैव हि मन्द्रश्च तथा तारतरः पुनः ।
प्रेङ्खोलितस्तारमन्द्रो मन्द्रतारः समस्तथा ॥ २५७ ॥

सन्निवृत्तप्रवृत्तश्च प्रसादोपाङ्ग एव च ।
अवलोकस्तथा वेणुरित्येते सर्ववर्णगाः ॥ २५८ ॥

स्थायिवर्णादृते त्वन्ये सर्ववर्णाः प्रयोगिणः ।

## हरिपालीये

प्रसन्नादिः प्रसन्नान्तो मध्यदीप्तस्तथा परः ॥ २५९ ॥

भवेत्प्रसन्नमध्यश्च पञ्चमो बिन्दुरुच्यते ।
सन्निवृत्तप्रवृत्तस्तु ततः प्रेङ्खोलितः परम् ॥ २६० ॥

तारमन्द्रप्रसन्नाद्यो मन्द्रतारप्रसन्नकः ।
समः कम्पित इत्येकस्तथा कुहरितः परम् ॥ २६१ ॥

रेचिताख्यः क्रमेणैषां लक्षणं प्रतिपाद्यते ।

**इत्यलङ्कारोद्देशः निरूपितः ॥**

**अथ रत्नाकरोक्तालङ्कारलक्षणानि निगद्यन्ते :—**

मन्द्रः प्रकरणे ऽत्र स्यान्मूर्छनाप्रथमः स्वरः ॥ २६२ ॥

स एव द्विगुणस्तारः पूर्वः पूर्वो ऽथ वा भवेत् ।
मन्द्रः परस्ततस्तारः प्रसन्नो मृदुरित्यपि ॥ २६३ ॥

मन्द्रस्तारस्तु दीप्तः स्यान्मन्द्रो बिन्दुशिरा भवेत् ।
ऊर्ध्वरेखाशिरास्तारो लिपौ त्रिर्वचनात्प्लुतः ॥ २६४ ॥

मन्द्रद्वयात्परे तारे प्रसन्नादिरितीरितः (१) ।
तद्वैलोम्ये प्रसन्नान्तः (२) प्रसन्नद्वयमध्यगे ॥ २६५ ॥

दीप्ते प्रसन्नाद्यन्तस्स्यात् (३) तारयोर्मध्यगे पुनः ।
मन्द्रे प्रसन्नमध्याख्यमलङ्कारं विदो विदुः (४) ॥ २६६ ॥

आद्यन्तौ मूर्छनाऽऽदिश्चेत्स्वरो मध्ये द्वितीयकः ।
सैका कला भवेन्मध्ये स्तः तृतीयचतुर्थकौ ॥ २६७ ॥

सा द्वितीया पञ्चमाद्यास्त्रयो ऽन्तश्चेत्कला परा ।
एवं कलात्रयेणोक्तो ऽलङ्कारः क्रमरेचितः (५) ॥ २६८ ॥

दीप्तो ऽन्तश्चेत्प्रतिकलं प्रस्तारः सो ऽभिधीयते (६) ।
तारमन्द्रविपर्यासात् प्रसादं तं प्रचक्षते (७) ॥ २६९ ॥

## इति स्थायिगतालङ्कारलक्षणानि ॥

मूर्छनाऽऽदेः स्वराद्यत्र क्रमेणा ऽऽरोहणं भवेत् ।
स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णो ऽभिधीयते (१) ॥ २७० ॥

ह्रस्वैः स्वरैः स निष्कर्षो द्विर्द्विरुक्तैर्निरन्तरैः (२क) ।
त्रिश्चतुर्वा स्वरोच्चारे गात्रवर्णमिमं विदुः (२ख) ॥ २७१ ॥

निष्कर्षस्यैव भेदौ द्वौ केचिदेतौ बभाषिरे ।
प्लुतं ह्रस्वं प्लुतं ह्रस्वं प्लुतं ह्रस्वं प्लुतं स्वरम् ॥ २७२ ॥

कुर्वन् क्रमाद्यदारोहेत्ततो बिन्दुरयं मतः (३) ।
एकान्तरस्वरारोहमाहुरत्युच्चयं बुधाः (४) ॥ २७३ ॥

यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः ।
आरुह्यन्ते स्वराः प्राह हसितं तं शिवप्रियः (५) ॥ २७४ ॥

स्वरद्वयं समुच्चार्य पूर्वं पूर्वयुतं परम् ।
यत्रान्दोलितमारोहेत् प्रेङ्खितो ऽसौ क्रमो ऽथ वा (६) ॥ २७५ ॥

एकान्तरं स्वरयुगं तादृक्पूर्वयुतं परम् ।
क्रमादारोहति यदा तदा ऽऽक्षिप्तं प्रचक्षते (७) ॥ २७६ ॥

त्रिस्वरा ऽऽद्या कला ऽन्ये च पूर्वपूर्वान्तिमादिमे ।
कले सत्रिस्वरे यत्र सन्धिप्रच्छादनस्तु सः (८) ॥ २७७ ॥

यदा ऽऽद्याद्यस्त्रिरावृत्तः कलयोस्त्रिस्वरात्मनोः ।
तदोद्गीतः (९) मध्यमेन तादृशोद्गाहितो मतः (१०) ॥ २७८ ॥

अन्यस्य तु त्रिरावृत्तः त्रिवर्णं वर्णयन्त्यमुम् (११) ।
त्रयाणान्तु त्रिरावृत्तौ पृथग्वेणुरयं मतः (१२) ॥ २७९ ॥

इत्यारोह्यलङ्कारलक्षणानि ॥

प्रातिलोम्येनोच्यते चेदेतान्येवावरोह्यलङ्कारलक्षणानि (१-१२)

अथ सञ्चार्यलङ्कारलक्षणानि :—

त्रिस्वरा ऽद्या कलैकैकमन्द्रत्यागेन चापराः ।
त्रिस्वराश्चेत्कला मन्द्राद्या मन्द्रादिस्तदा भवेत् (१) ॥ २८० ॥

ताः कला मन्द्रमध्यान्ताः क्रमाच्चेदपरौ तदा (२,३) ।
त्यक्तान्तरं स्वरयुगं त्यक्तादारभ्य चेत्पुनः ॥ २८१ ॥

युगं तादृक् समारोहेत्तदा प्रस्तार उच्यते (४) ।
पूर्वः पूर्वः परस्योर्ध्वाधोवर्ती क्रियते स्वरः ॥ २८२ ॥

यदा तदा प्रसादं तमाह श्रीकरणेश्वरः (५) ।
चतुःस्वरकला तत्र तृतीयश्चद्वितीयकात् ॥ २८३ ॥

तुर्यं गत्वा ऽऽदिमं गच्छेदेवमेकैकहानतः ।
चतुःस्वराः परा यत्र स व्यावृत्तः स्मृतो बुधैः (६) ॥ २८४ ॥

कलां प्रयुज्य मन्द्रादेर्द्विरुक्तोर्ध्वस्वरान्विताम् ।
अवरुह्येत चेदेष स्खलिताख्यस्तदा भवेत् (७) ॥ २८५ ॥

स्वरं द्वितीयमुज्झित्वा त्रिस्वरा ऽऽद्या कला यदि ।
त्यक्तादारभ्य तादृश्यो ऽन्यास्तदा परिवर्तकः (८) ॥ २८६ ॥

त्रिस्वराश्चेत्कलाः पूर्वपूर्वत्यागोर्ध्वसङ्क्रमैः ।
तदा ऽऽक्षेपः (९) अथ बिन्दुः स यत्र प्लुतमधःस्वरम् ॥ २८७ ॥

कृत्वा ऽग्निवत्परं स्पृष्ट्वा ऽधस्पर्शनाखिलाः कलाः (१०) ।
कलायां त्रीन्स्वरान्गीत्वा ऽवरुह्यैकं पराः कलाः ॥ २८८ ॥

यत्रैकैकोज्झिता गीतास्तद्वदुद्वाहितस्तु सः (११) ।
मूर्छनादेः स्वरात्तुर्यं प्लुतीकृत्याद्यामेति च ॥ २८९ ॥

तुर्यगाने कलैकैकहानाद्यत्रापरास्तथा ।
स ऊर्मिः स्यात् (१२) स तु समः कला यत्र चतुःस्वराः ॥ २९० ॥

तुल्यारोहावरोहैकैकहानादपरास्तथा (१३) ।
कला गतागतवती द्विस्वरैकैकहानतः ॥ २९१ ॥

यत्रान्यास्तादृशः स स्यात्प्रेङ्खः (१४) निष्कूजितः पुनः ।
प्रसादस्य कलां गीत्वा तत्कलादिस्तृतीयकम् ॥ २९२ ॥

गत्वा ऽऽद्यगानाद्भवति (१५) श्येनस्संवादियुग्मकैः ।
क्रमात्सरिगमाद्यैः स्यात् (१६) कला द्वित्रिचतुःस्वराः ॥ २९३ ॥

आद्यस्वराद्यास्तिस्रः स्युः द्वितीयाद्यादयस्तथा ।
यत्रासौ क्रम इत्युक्तः (१७) स तूद्घट्टित उच्यते ॥ २९४ ॥

यत्र स्वरद्वयं गीत्वा पञ्चमाच्चतुरः स्वरान् ।
अवरोहां कलां गायेत्त्यक्तैकैकस्वरे परे (१८) ॥ २९५ ॥

द्विरुक्ता यदि मन्द्रान्ता मन्द्रादेः स्युः कलास्तथा ।
रञ्जितः (१९) अथ भवेदेषः सन्निवृत्तप्रवृत्तकः ॥ २९६ ॥

यत्राद्यपञ्चमौ गीत्वा तुर्यात्त्रीनवरोहति ।
क्रमात्कला सा यत्रान्यास्तद्वदेकैकहानतः (२०) ॥ २९७ ॥

यत्राद्यः स्याद् द्विर्द्वितीयचतुर्थकतृतीयकाः ।
सकृत्कलाऽन्याश्चैकैकहानाद्वेणुरसौ मतः (२१) ॥ २९८ ॥

गीत्वा ऽऽद्यौ द्वौ चतुर्थञ्च यस्यां तावयरोहति ।
कलाश्चान्याश्च तादृश्यो यत्र सा ललितस्वरः (२२) ॥ २९९ ॥

आदिमेन कला यत्र द्विस्वरा ऽऽद्या गतागतैः ।
स्वैरेकोत्तरं वृद्धैः स हुङ्कारो निगद्यते (२३) ॥ ३०० ॥

ह्लादमाने प्रसन्नान्ता मन्द्रादेस्तु कला मताः (२४) ।
यदा ऽऽरोहे ऽवरोहे च स्वद्वितीयं परित्यजेत् ॥ ३०१ ॥

चतुःस्वरा समकला तदा स्यादवलोकितः (२५) ।
एते सञ्चार्यलङ्कारा आरोहेण प्रदर्शिताः ॥ ३०२ ॥

एतानेवावरोहेण प्राह श्रीकरणाग्रणीः ।

## इति सञ्चार्यलङ्कारलक्षणानि ॥

कलास्तेषां द्वितीयाद्याः पूर्वैकैकप्रहाणतः ॥ ३०३ ॥

अष्टमस्वरपर्यन्तमारुह्याद्यं व्रजेद्यदि ।
तारमन्द्रप्रसन्नो ऽयमलङ्कारस्तदोच्यते (१) ॥ ३०४ ॥

मन्द्राद्दष्टममुत्पत्य सप्तकस्यावरोहणे ।
मन्द्रतारप्रसन्नाख्यमाह माहेश्वरोत्तमः (२) ॥ ३०५ ॥

आद्यं द्वितीयमाद्यञ्च द्विर्द्विर्गीत्वा द्वितीयकम् ।
सकृदाद्यं यत्कलायां गायेदावर्तकस्तु सः (३) ॥ ३०६ ॥

एतस्यैव कला ऽन्त्यौ द्वौ स्वरौ सन्त्यज्य गीयते
यदा तदा सं ऽदानमलङ्कारं विदुर्विदः (४) ॥ ३०७ ॥

युग्ममेकान्तरितयोस्त्यक्तादप्येवमेव चेत ।
द्विर्द्विः प्रयुज्येत तदा विधूतो बुधसम्मतः (५) ॥ ३०८ ॥

कलायामाद्ययोर्युग्मं चेद् द्वितीयतृतीययोः ।
द्विर्द्विः प्रयुज्यते तदृज्ञैरुपलोलस्तदुच्यते (६) ॥ ३०९ ॥

द्विर्गीत्वा ऽऽद्यं तृतीयञ्च प्रथमञ्च तृतीयकम् ।
सकृद्गायेद्यत्कलायां तमुल्लासितमूचिरे (७) ॥ ३१० ॥

इत्यन्योक्ताः सप्तालङ्काराः ॥

इति प्रसिद्धालङ्कारास्त्रिषष्टिरुदिता मया ।
अनन्तत्वात्तु शास्त्रे न सामस्त्येन कीर्तिताः ॥ ३११ ॥

रक्तिलाभः स्वरज्ञानं वर्णगानविचित्रता ।
इति प्रयोजनान्याहुरलङ्कारनिरूपणे ॥ ३१२ ॥

**इति रत्नाकरोक्तः त्रिषष्ट्यलङ्कारप्रपञ्चः ॥**

## अथ भारतीयोक्तालङ्कारलक्षणानि कथ्यन्ते :—

अतः परं प्रवक्ष्यामि वर्णालङ्कारलक्षणम् ।
क्रमशोद्दीर्यते[1] यस्तु प्रसन्नादिः स कथ्यते (१) ॥ ३१३ ॥

व्यस्तोच्चारित एवैषः प्रसन्नान्तो विधीयते (२) ।
आद्यन्तयोः प्रसन्नत्वात् प्रसन्नाद्यन्त इष्यते (३) ॥ ३१४ ॥

प्रसन्नमध्यो मध्ये तु प्रसन्नत्वादुदाहृतः (४) ।
सर्वसाम्यात्समो ज्ञेयः (५) स्थितस्त्वेकस्वरो बहिः[2] ॥ ३१५ ॥

आदिमध्यलयो यस्तु स चोर्मिरिति संज्ञितः (६) ।
अपाङ्गितस्तु विज्ञेयः स्वराणामथ सञ्चरात् (७) ॥ ३१६ ॥

बिन्दुरेककलस्तारं स्पृष्ट्वा तु पुनरागतः (८) ।
सन्निवृत्तप्रवृत्तस्तु मन्द्रं गत्वा समागतः (९) ॥ ३१७ ॥

आक्रीडितलयो यस्तु स वेणुरिति संज्ञितः (१०) ।
[कण्ठे निरुद्धपवनः कुहरोनाम जायते (११) ॥ ३१८ ॥

त्रिकलः कम्पनाद्यस्तु कम्पितस्तु (१२) कलात्रयम् ।][3]
गतागतप्रवृत्तो यः स प्रेङ्खोलित उच्यते (१३) ॥ ३१९ ॥

---

[1] 'दीप्यते' इति (बृहद्देश्यां) मतङ्गोद्धृतभरतपाठः ।

[2] 'स्थितश्चैकस्वरेऽपि हि' इति मतङ्गोद्धृतभरतपाठः ।

[3] अस्य श्लोकस्थाने 'उरोगतः कम्पितः स्यात् कम्पनाच्च कलात्रयः ।
कण्ठे निरुद्धः पवनो रु(कु)हरो नाम जायते ।
त्रिकला कम्पना तद्वद्रेचिताख्यः शिरोगतः । '
इति सार्धश्लोकः मतङ्गोद्धृतभारतीयपाठः दृश्यते ।

यस्तु कण्ठे स्वरो ऽथ स्यात् स तु तारः प्रकीर्तितः (१४)।
उरोगतस्तथा मन्द्रः (१५) मूर्ध्नि तारतमः स्मृतः (१६) ॥ ३२० ॥

क्रमागतस्तु यस्तारः चतुर्थः पञ्चमो ऽपि च ।
तारमन्द्रप्रसन्नस्तु ज्ञेयो मन्द्रगतस्तु सः (१७) ॥ ३२१ ॥

लङ्घयित्वा परान्मन्द्रान् क्रमात्तारगतां पुनः ।
मन्द्रतारप्रसन्नस्तु ज्ञेयो ह्यारोहणाद्बुधैः (१८) ॥ ३२२ ॥

एकस्वराधिरूढः क्रमशः प्रस्तारसंज्ञितो ज्ञेयः (१९) ।[1]
एकान्तरमारुह्य प्रत्येत्येकान्तरं स्वरम् ॥ ३२३ ॥

निष्कूजितं चासौ उद्गीतः पण्डितैरलङ्कारः (२०) ।
क्रमयोगेनानेन तु सञ्चारेकान्तरस्वरो द्विकलः ॥ ३२४ ॥

ह्यपरः षट्पर एव ह्यवरोही[2] ह्रादमानः स्यात् (२१) ।
अथ रञ्जितश्च समनन्तरे स्वरे द्विकले पुनः स्थित्वा ॥ ३२५ ॥

अर्धकलामारोही पुनरेव तथावरोही स्यात् (२२) ।
आवर्तकश्चतुर्थे[3] स्वरेषु समनन्तरेषु संभवः ॥ ३२६ ॥

---

[1] अत्रस्थाने 'समनन्तरो द्वापै (?द्वावपे)त्युद्वाहितो द्विकले वा।
आरोहत्येककलां..................प्रसाधयति ।
उद्वाहित एव स्यादुपलोलक संज्ञको द्विरभ्यस्वना (?) स्तश्च ।
एकं द्वे त्रीणि गच्छन् स्वरक्रमेण क्रमो ज्ञेयः ।'
द्वाविमौ श्लोकौ बृहद्देश्यां परिदृश्येते ।

[2] 'त्रिकलस्वपरषड्जमेवमा (?मव)रोहि' इति मतङ्गोद्धृतभरतपाठः ।

[3] 'आवर्तकश्चतुर्ष्वि'ति भारतीयपाठान्तरं तत्रैव ।

आरोहणावरोहणविधिना चैकान्तरेष्वपि च ।
ज्ञेयो निरन्तरकृतस्त्वष्टकलास्त्वन्तरस्तथा कार्यः ॥ ३२७ ॥

तद्ज्ञैः कलाश्चतस्रस्त्वावृत्यप्रवृत्तको भवति (२३) ।
अधिरुह्य तु स्वरांस्तत्स्वरान्तरं लङ्घयति च यद्वृत्तौ[1] ॥ ३२८ ॥

पुनरपि च कलावृत्त्या[2] स स्यात्परिवर्तको ऽष्टकलः (२४) ।
यस्य स्वरावतीतौ[3] तथा परस्त्वन्तरो भवति ॥ ३२९ ॥

एककलश्चैव यथा तथा भवत्युद्धट्टितो ज्ञेयः (२५) ।
एककलस्त्वपरस्स्याद्विज्ञेयः षट्कलस्त्वपरः ॥ ३३० ॥

आक्षिप्तवच्चतुर्भिः स्वरैस्तु काले[4] कलान्तरो वै सः ।
एकान्तरस्वरैः क्रम इह गदितस्संप्रदानस्तु (२६) ॥ ३३१ ॥

द्विरपि द्विकलं गदितं हसितमिवोच्चारितं तथाह ।[5]
समनन्तरस्वरेषु तु हसिताद्व्यपरश्चतुःस्वरो वाऽपि ॥ ३३२ ॥

आरोह्यैककलां हुङ्काराख्यः स विज्ञेयः (२७) ।
स्थानान्तरमारुह्य प्रत्येति तत[6]श्चतुष्कलक्रमतः ॥ ३३३ ॥

---

1 'अधिरुह्य च स्वरांस्त्रीन् स्वरान्तरं लङ्घयति च निवृत्ते' इति मतङ्गोद्धृत-भरतपाठः ।

2 'परावृत्त्य' इति पाठः तत्रैव ।

3 'यः स्वरापतितौ' इति पाठः तत्रैव ।

4 'स्वरैस्त्रिस्वरो' इति पाठः तत्रैव ।

5 अत्रस्थाने बृहद्देश्यां 'समनन्तरस्वरकृतं' चाक्षिप्तकमिव बुधैर्ज्ञेयमि'ति मतङ्गोद्धृतभारतीयश्लोकार्धः आधिक्येन वर्तते ।

6 प्रत्येकद्व्य-' इति मतङ्गोद्धृतभरतपाठः ।

सो ऽर्धपरिक्षेपः स्यात् सन्धिप्रच्छादको नाम (२८) ।
आदौ पदमुच्चार्य तु यत्र स्याद्द्विस्वरो लघुनि वर्णे ॥ ३३४ ॥

समनन्तरमारोहत्येककलं तद्विधूतन्तु (२९) ।
आदावरोही स्यात् प्रस्तारो ऽन्ते ऽधिरोहति च ॥ ३३५ ॥

यत्राद्यन्तकलासु वदन्त्यलङ्कारमुद्गीतम् (३०) ।
हुङ्कारवदारोहेदनन्तरन्तु स्वरान् कलान्तरयोः ॥ ३३६ ॥

द्वौ द्वौ कम्पयमानौ स्वरौ ततश्च प्रसन्नौ द्वौ ।
एषो ऽलङ्कारविधौ विज्ञेयो गात्रवर्ण इत्येव (३१) ॥ ३३७ ॥

एकारोकारयुतौ दीर्घाक्षरमन्यदपि योज्यम् ।
गीतालङ्करणानां विधिरयं यथावदुद्दिष्टः ॥ ३३८ ॥

एभिरलङ्कर्तव्या च गीतिवर्णाविरोधेन ।
स्थाने वा ऽलङ्कारं कुर्यान्काप्युरं सिकाञ्चिकां बध्येत् (?) ॥ ३३९ ॥

अतिबहवो ऽलङ्कारा वर्णविहीना न योक्तव्याः ।
शशिविरहितेव रजनी विजलेव नदी लता विपुष्पैव ॥ ३४० ॥

अनलङ्कृतेव नारी गीतिरलङ्कारहीना स्यात् ।
अलङ्कारास्त्रयस्त्रिंशदेवमेते मयोदिताः ॥ ३४१ ॥

**इति भारतीयोक्तालङ्कारलक्षणानि ॥**[1]

---

[1] अत्र एतद्भारतीयग्रन्थसन्दर्भे इदं तु बोध्यम् :

उद्देशकथनावसरे अस्मत्संग्रहकारोदाहृतभारतीयवचनानुसारेण सप्तस्थाय्य-लङ्काराः चतुर्दश सञ्चार्यलङ्काराः त्रयोदश आरोह्यलङ्काराः पञ्च अवरोह्यलङ्काराश्चेति आहत्य एकोनचत्वारिंशत्सङ्ख्याकाः अलङ्काराः उद्दिष्टाः । किन्तु अत्रैव उदाहृता

अथ हरिपालीयोक्तालङ्कारलक्षणानि निगद्यन्ते :—

पूर्वं प्रसन्नमुच्चार्य स्वरवृद्धिं नयेद्यदि ।
स प्रसन्नादिरित्युक्तः (१) प्रसन्नान्तो ऽथ वक्ष्यते || ३४२ ||

अमुष्यैव विपर्यासात् प्रसन्नान्तः समीरितः (२) ।
आद्यन्तयोः प्रसन्नत्वमन्तरे यस्य दीप्तता || ३४३ ||

स एव मध्यदीप्तः स्यादलङ्कार उदाहृतः (३) ।
वृद्धिमाद्यन्तयोः कृत्वा मध्ये यस्य प्रसन्नता || ३४४ ||

भवेत्प्रसन्नमध्यो ऽसावलङ्कार उदाहृतः (४) ।
अलङ्काराः समाख्याताः स्थायिवर्णसमाश्रयाः || ३४५ ||

स्वरे क्वचिच्चिरं स्थित्वा तारं संस्पृश्य शीघ्रतः ।
पूर्वस्थाने यदा याति स बिन्दुरिति संज्ञितः (५) || ३४६ ||

---

'अलङ्कारास्त्रयस्त्रिंशदेवमेते मयोदिताः' इति भारतीयोपसंहारोक्तिः तेन न सङ्गच्छते। तत्रेदं कारणं भाति :

उद्दिष्टालंकारेषु षण्णामलंकाराणां एकनामत्वात् उद्दिष्टसङ्ख्यामनादृत्य त्रयस्त्रिंशदित्युक्तमिति। लक्षणग्रन्थे तु उद्देशक्रमं विहाय अनियमेन एकत्रिंशदलंकाराः लक्षिताः। तत्रापि क्रमरेचितः, प्रसादः, प्रेङ्खितः, रेचितः, अवलोकितः, क्षिप्तः, विस्तीर्णः, उद्वाहित इति अष्टानां उद्दिष्टानामप्यलंकाराणां लक्षणं नोक्तम्। किन्तु ऊर्मिः, अपाङ्गितः, तारः, तारतमः, तारमन्द्रप्रसन्नः, मन्द्रतारप्रसन्नश्चेति षण्णामनुद्दिष्टानामपि लक्षणं कथितम्। तत्र प्रेङ्खितावलोकितयोः यथा क्रमं ऊर्म्यपांगितसमानार्थकत्वात् लक्षणं उक्तप्रायमेवस्स्यात्। तथापि अवशिष्टानां लक्ष्यलक्षणव्यवस्था आकरग्रन्थादिपर्यालोचनया सुधीभिर्विभाव्या। अपि च अस्माभिरुपलब्धभारतीयमूलग्रन्थे 'एकस्वराधिरूढः' इत्यारभ्य अष्टादशश्लोकाः नोपलब्धाः।

मन्द्रं संस्पृश्य सहसा स्थानमभ्येति यन्निजम् ।
सन्निवृत्तप्रवृत्तः स्यादिति प्राहुर्मनीषिणः (६) ॥ ३४७ ॥

स्थित्वैकस्मिन्स्वरे तारमन्द्रयोर्गमनं यदा ।
यद्विधत्ते मनागेतत्प्रेङ्खोलितमितीरितम् (७) ॥ ३४८ ॥

संस्पृश्य परमं तारं मन्द्रे यत्पतति क्षणात् ।
तारमन्द्रो प्रसन्नो ऽसावलङ्कार उदाहृतः (८) ॥ ३४९ ॥

उद्धृत्य मन्द्रात्तारं यः क्रमात् समवरोहति ।
मन्द्रतारप्रसन्नो ऽसावलङ्कार इति स्मृतः (९) ॥ ३५० ॥

सञ्चारिवर्णसम्बन्धाः पञ्चैते परिकीर्तिताः ।
चतुर्ष्वपि च वर्णेषु समवृत्त्या समो भवेत् (१०) ॥ ३५१ ॥

ऋषभस्य हृदिस्थस्य कम्पनात् कम्पितं स्मृतम् (११) ।
वर्णस्यर्षभकम्पेन भवेत्सञ्चारिता (?कुहरिता)भिधः (१२) ॥ ३५२ ॥

ऋषभस्य हृदिस्थस्य रेचनाद्रेचितः स्मृतः (१३) ।
आरोहिवर्णगामिस्यात् प्रसन्नादिः कदाचन ॥ ३५३ ॥

अवरोहणमभ्येति प्रसन्नान्तस्तु जातुचित् ।
समाधाय तु चत्वारः सर्ववर्णसमाश्रयाः ॥ ३५४ ॥

अवशिष्टा त्वलङ्काराः स्थायिवर्णानुयायिनः ।
अलङ्काराः समाख्यातास्त्रयोदशविधा बुधैः ॥ ३५५ ॥

**इत्यलङ्कारलक्षणम् ॥**

**एतेषां लक्ष्यानि सङ्गीतरत्नाकरे द्रष्टव्यानि । ग्रन्थविस्तरभीतेन मुम्मडिचिक्कभूपालेन नात्र लिखितानि ॥**

**अथ क्रमप्राप्तः सङ्गीतरत्नाकरोक्तः जात्युद्देशो यथा :—**

शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ।
षाड्ज्यार्षभी च गान्धारी मध्यमा पञ्चमी तथा ॥ ३५६ ॥

धैवती चाथ नैषादी शुद्धताल‍क्ष्म कथ्यते ।
यासां नामस्वरो न्यासो ऽपन्यासोंऽशो ग्रहस्तथा ॥ ३५७ ॥

तारन्यासविहीनास्ताः पूर्णाः शुद्धाभिधा मताः ।
विकृता न्यासवर्जैतल्लक्ष्महीना भवन्त्यमूः ॥ ३५८ ॥

संपूर्णत्वग्रहांशापन्यसेष्वेकैकवर्जनात् ।
भवन्ति भेदाश्चत्वारो द्वयोस्त्यागे तु षण्मताः ॥ ३५९ ॥

त्यागे त्रयाणां चत्वार एकस्त्यक्ते चतुष्टये ।
भेदाः पञ्चदशैवैते षाड्ज्याः सद्भिर्निरूपिताः ॥ ३६० ॥

तत्राष्टौ पूर्णताहीनाः सप्त त्वितरवर्जिताः ।
द्विधा स्युः पूर्णताहीनाः षाडवौडुवभेदतः ॥ ३६१ ॥

अतो ऽष्टावधिका आर्षभ्यादिष्वौडुवजातिपु ।
अतस्त्रयोविंशतिधा षाड्ज्याः[1] प्रत्येकमीरिताः ॥ ३६२ ॥

विकृतानान्तु संसर्गाज्जाता एकादश स्मृताः ।
स्यात्षड्जकैशिकी षड्जोदीच्यवा षड्जमध्यमा ॥ ३६३ ॥

गान्धारोदीच्यवा रक्तगान्धारी कैशिकी तथा ।
मध्यमोदीच्यवा कार्मारवी गान्धारपञ्चमी ॥ ३६४ ॥

---

[1] 'षट्सु' इति रत्नाकरमूलग्रन्थपाठः ।

तथा ऽऽन्ध्री नन्दयन्तीति तद्धेतूनधुना ब्रुवे ।
षाड्जीगान्धारिकायोगाज्जायते षड्जकैशिकी || ३६५ ||

षाड्जिकामध्यमायोगाज्जायते षड्जमध्यमा ।
गान्धारीपञ्चमीभ्यान्तु जाता गान्धारपञ्चमी || ३६६ ||

गान्धार्यार्षभिकाभ्यान्तु जातिरान्ध्री प्रजायते ।
षाड्जीगान्धारिका तद्वद्धैवती मिलितास्त्विमाः || ३६७ ||

[षड्जोदीच्यवतीं जातिं कुर्युः कार्मारवीं पुनः ।
उत्पादयन्ति नैषादीपञ्चम्यार्षभिका युताः || ३६८ ||

नन्दयन्तीन्तु गान्धारीपञ्चम्यार्षभिका युताः ।
गान्धारी धैवती षाड्जी मध्यमेति युतास्त्विमाः || ३६९ ||

गान्धारोदीच्यवां कुर्युः मध्यमोदीच्यवां पुनः ।
एता एव विना षाड्ज्या पञ्चम्या सह कुर्वते || ३७० ||

कुर्युस्ता रक्तगान्धारीं नैषादी च न धैवती ।
आर्षभीं धैवतीं त्यक्त्वा पञ्चभ्यः कैशिकी भवेत् ][1] || ३७१ ||

**इति सङ्गीतरत्नाकरोक्तः जात्युद्देशः ॥**

**अथ भारतीयोक्तजात्युद्देशो यथा :—**

स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः ।
मध्यमा पञ्चमी चैव षड्जमध्या तथैव च || ३७२ ||

---

[1] श्लोकचतुष्टयमिदं मातृकायां नोद्धृतम् ।

आसामंशास्तु विज्ञेयाः षड्जमध्यमपञ्चमाः ।
यथास्वं दुश्चलतलाः (?निगाः) व्यक्ता सा पञ्चमी तथा ॥ ३७३ ॥

जातयोऽष्टादशेत्येव ब्रह्मणा गदितं पुरा ।
तास्त्वहं वर्णयिष्यामि न्यासापन्याससंयुताः ॥ ३७४ ॥

षाड्जी चैवार्षभी चैव धैवती च निषादिनी ।
षड्जोदीच्यवती चैव ततो वै षड्जकैशिकी ॥ ३७५ ॥

षड्जमध्या तथा चैव षड्जग्रामसमाश्रयाः ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ॥ ३७६ ॥

गान्धारी मध्यमा चैव गान्धारोदीच्यवा तथा ।
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी[1] ॥ ३७७ ॥

मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च ।
कार्मारवीति विज्ञेया तथाऽऽन्ध्री कैशिकी तथा ॥ ३७८ ॥

एतासामष्टादशजातीनां सप्तस्वराख्याः । ताश्च द्विविधा–शुद्धा विकृताश्च । तत्र शुद्धाः : षड्जग्रामे षाड्जी आर्षभी धैवती निषादवती । गान्धारी मध्यमा पञ्चमी चेति मध्यमग्रामे । एताश्शुद्धविकृताश्च । शुद्धा अन्यूनस्वराः अंशग्रहन्यासापन्यासाश्च । एषामन्यतमेन द्वाभ्यां बहुभिर्वापि लक्षणैर्विक्रियामुपागताः न्यासवर्जं विकृतसंज्ञा भवन्ति । तेन ता एव शुद्धास्ता एव विकृताः । न्यासविधावप्यासां मन्द्रनियमाच्छुद्धाः विकृतास्त्वनियमादिति । तत्रैकादशसंसर्गा जातिविकृताश्च परस्परसंयोगादेकादश निवर्तयन्ति यथा—

---

[1] मातृकायां पतितः ।

शुद्धा विकृताश्चैव हि समवायाज्जातयस्तु जायन्ते ।
पुनरेव शुद्धा विकृता भवन्त्यथैकादशान्यास्तु ॥ ३७९ ॥

तासां या निर्वृत्ता स्वरेष्वथांशेषु तासु जातिः ।
तां वक्ष्यामि यथावत्सङ्क्षेपेण क्रमेणैव ॥ ३८० ॥

[स्यात्षड्जमध्यमाभ्यां संयोगात् षड्जमध्यमाजातिः ।
गान्धारीषाड्जीभ्यां संयोगात् षड्जकैशिकीजातिः ॥ ३८१ ॥

गान्धारीषाड्जीभ्यां धैवत्याश्चापि सङ्गमाद्या च ।
षड्जोदीच्यवती ज्ञेया सा नामतो जातिः ॥ ३८२ ॥

षाड्जी गान्धारी मध्यमा तथा धैवती च खलुजातिः ।
गान्धारोदीच्यवतीं जातिञ्च निर्वर्तयन्त्येताः ॥ ३८३ ॥

गान्धार(? री)पञ्चमीभ्यां मध्यमया विरचिता सधैवत्या ।
जातिस्तु मध्यमोदीच्यवेति सद्भिस्सदा ज्ञेया ॥ ३८४ ॥][1]

गान्धार्या पञ्चम्या मध्यमासप्तम्याच्चैव रक्तगान्धारी ।
गान्धारीषाड्जी(? आर्षभिका)भ्यामान्ध्री सञ्जायते जातिः॥ ३८५ ॥

योनिस्तु नन्दयन्त्यास्त्वार्षभीपञ्चमी सगान्धारी ।
कार्मारवीं निषादी चार्षभिपञ्चमिका कुर्युः ॥ ३८६ ॥

गान्धारीपञ्चमीर्योगाद्गान्धारपञ्चमीजातिः ।
धैवत्यार्षभिकाभ्यां हीना खलु कैशिकीं कुर्युः ॥ ३८७ ॥

---

[1] अस्य श्लोकचतुष्टयस्य च्छन्दो भ्रष्टः । भागोऽयं मातृकायां यथा लिखितः तथैवात्र दर्शितः ।

अपरस्वरनिष्पन्ना विज्ञेया जातयो बुधैः ।
पृथग्लक्षण संयुक्ता द्वैग्रामिक्यस्वराश्रयाः ॥ ३८८ ॥

आभ्यश्चतस्रो नियमाद् ज्ञेयाः सप्तस्वरा बुधैः (?) ।

## इति भारतीयोक्तजात्युद्देशलक्षणानि ॥

## अथ हरिपालीयोक्तः जात्युद्देशो यथा :—

षड्जग्रामादि सम्भूता उद्दिश्यन्ते ऽथ जातयः ॥ ३८९ ॥

आर्षभी धैवती षाड्जी षड्जमध्या निषादिनी ।
षड्जोदीच्यवती चैव तथा ऽन्या षड्जकैशिकी ॥ ३९० ॥

षड्जग्रामे च सम्भूताः सप्तैता जातयः स्मृताः ।
गान्धारी रक्तगान्धारी गान्धारोदीच्यवा परा ॥ ३९१ ॥

मध्यमोदीच्यवा ऽन्या मध्यमा पञ्चमी तथा ।
गान्धारपञ्चमीत्यन्या नन्दयन्ती च कैशिकी ॥ ३९२ ॥

आन्ध्री कार्मारवी चैव जातयः परिकीर्तिताः ।
इत्येकादशसङ्ख्याताः मध्यमग्रामसम्भवाः ॥ ३९३ ॥
उक्तानामथ सर्वेषां लक्षणं कथ्यते क्रमात् ।

## इति हरिपालीयोक्तः जात्युद्देशः ॥

## अथ क्रमप्राप्तरत्नाकरोक्तजातिलक्षणानि यथा :—

षाड्ज्यामंशाः स्वराः पञ्च निषादर्षभवर्जिताः ॥ ३९४ ॥

निलोपात्षाडवं सो ऽत्र पूर्णत्वे काकली क्वचित् ।
सगयोः सधयोश्चात्र सङ्गतिर्बहुशस्तु गः ॥ ३९५ ॥

गान्धारांशे न नेर्लोपो मूर्छना धैवतादिका ।
त्रिधा तालः पञ्चपाणिरत्र चैककलाऽऽदिकः ॥ ३९६ ॥

क्रमान्मार्गाश्चित्रवृत्तिदक्षिणा गीतयः पुनः ।
मागधी सम्भाविता च पृथुलेति क्रमादिमाः ॥ ३९७ ॥

नैष्क्रामिकध्रुवायाञ्च प्रथमे प्रेक्षणे स्मृतः ।
विनियोगो द्वादशात्र कला ऽष्टगुरुः[1] कलाः ॥ ३९८ ॥

अस्यां षाड्ज्यां षड्जो न्यासः । गान्धारपञ्चमावपन्यासौ । वराटी दृश्यते ।

## इति रत्नाकरोक्ता षाड्जीजातिः ॥

आर्षभ्यान्तु त्रयोंऽशाः स्युः निषादर्षभधैवताः ।
द्विश्रुत्योः सङ्गतिः शेषैर्लङ्घनं पञ्चमस्य च ॥ ३९९ ॥

षाडवं षड्जलोपेन सपलोपादिहौडुवम् ।
मूर्छना पञ्चमादिश्च तालश्चञ्च(च)त्पुटो मतः ॥ ४०० ॥

अष्टौ कला भवन्तीह विनियोगस्तु पूर्ववत् ।

अस्यामार्षभ्यां ऋषभो न्यासः । अंशा एवापन्यासाः । देशीमधुकर्यौ दृश्येते ।

## इत्यार्षभी ॥

पञ्चांशा रिधवर्ज्याः स्युः गान्धार्यां सङ्गतिः पुनः ॥ ४०१ ॥

---

[1] 'अष्टलघु'रित्यपि पाठः वर्तते ।

न्यासांशाभ्यां तदन्येषां धैवतादृषभं व्रजेत् ।
रिलोपरिधलोपाभ्यां षाडवौडुविते क्रमात् ॥ ४०२ ॥

पञ्चमः षाडवद्वेषी निसमध्यमपञ्चमाः ।
अंशा द्विशन्त्यौडुवितं कलाः षोडश कीर्तिताः ॥ ४०३ ॥

मूर्छना धैवतादिः स्यात्तालश्चञ्चत्पुटो मतः ।
विनियोगो ध्रुवागाने तृतीयप्रेक्षणे भवेत् ॥ ४०४ ॥

अस्यां गान्धार्यां गान्धारो न्यासः । षड्जपञ्चमावपन्यासौ । गान्धार-पञ्चमदेशीवेलावल्यो दृश्यन्ते ।

इति गान्धारी ॥

पञ्चांशा मध्यमायां स्युरगान्धारनिषादकाः ।
षड्जमध्यमबाहुल्यं गान्धारोऽल्पोऽत्र षाडवम् ॥ ४०५ ॥

गलोपान्निगलोपेन त्वौडुवं स्यात् कलाष्टकम् ।
ऋषभादिर्मूर्छना स्यात्तालश्चञ्चत्पुटो मतः ॥ ४०६ ॥

विनियोगो ध्रुवागाने द्वितीयप्रेक्षणे भवेत् ।

अस्यां मध्यमायां मध्यमो न्यासः । अंशा एवापन्यासाः । चोक्षपञ्चम[1] देश्यन्धाल्यो दृश्यन्ते ।

इति मध्यमा ॥

रिपावंशौ तु पञ्चम्यां सगमास्त्वल्पका मताः ॥ ४०७ ॥

---

[1] 'चोक्षषाडव' इति रत्नाकरमूलग्रन्थपाठः ।

रिमयोस्सङ्गतिर्गच्छेत् पूर्णत्वे गान्निषादकम् ।
क्रमाद्गेन निगाभ्याञ्च षाडवौडुवता मता ॥ ४०८ ॥

ऋषभोंऽशस्त्वौडुवितं द्वेष्टयष्टौ च कला मताः ।
मूर्छनाऽऽदि तु पूर्ववत्प्रेक्षणन्तु तृतीयकम्[1] ॥ ४०९ ॥

अस्यां पञ्चम्यां पञ्चमो न्यासः । ऋषभपञ्चमनिषादा अपन्यासाः । चोक्षपञ्चमदेश्यन्धाल्यो दृश्यन्ते ।

## इति पञ्चमी ॥

स्तो धैवत्यां रिधावंशौ लङ्घ्यावारोहिणौ सपौ ।
पलोपात्षाडवं प्रोक्तमौडुवं सपलोपतः ॥ ४१० ॥

ऋषभादिमूर्छना स्यात्तालो मार्गश्च गीतयः ।
विनियोगश्च षाड्जीवत् कला द्वादश कीर्तिताः ॥ ४११ ॥

अस्यां धैवत्यां धैवतो न्यासः । ऋषभमध्यमधैवता अपन्यासाः चोक्षकैशिकदेशीसिह्माल्यो दृश्यन्ते ।

## इति धैवती ॥

नैषाद्यां निरिगा अंशा अनंशाबहुलाः स्मृताः ।
षाडवौडुवलङ्घ्याः स्युः पूर्ववद्विनियोजनम् ॥ ४१२ ॥

---

[1] मातृकायां पतितः ।

चञ्चत्पुटः षोडशात्र कला गादिश्च मूर्छना ।

अस्यां नैषाद्यां निषादो न्यासः । अंशा एवापन्यासाः । चोक्षसाधारितदेशीवेलावल्यो दृश्यन्ते ।

इति नैषादी ॥

अंशाः स्युः षड्जकैशिक्यां षड्जगान्धारपञ्चमाः ॥ ४१३ ॥

ऋषभे मध्यमे ऽल्पत्वं धनिषादौ मनाग्बहू ।
चञ्चत्पुटः षोडशास्यां कलाः स्युर्विनियोजनम् ॥ ४१४ ॥

प्रावेशिक्यां ध्रुवायां स्यात्प्रेक्षणे तु द्वितीयके ।

अस्यां षड्जकैशिक्यां न्यासो गान्धारः । षड्जनिषादपञ्चमा अपन्यासाः । प्रागुक्ता गान्धारपञ्चमहिन्दोलकदेशीवेलावल्यो दृश्यन्ते ।

इति षड्जकैशिकी ॥

अंशाः समनिधाः षड्जोदीच्यवायां प्रकीर्तिताः ॥ ४१५ ॥

मिथश्च सङ्गतास्ते स्युर्मन्द्रगान्धारभूरिता ।
षड्जर्षभौ भूरितारौ रिलोपात्षाडवं मतम् ॥ ४१६ ॥

औडुवं रिपलोपेन धैवतेंऽशे न षाडवम् ।
षाड्जीवद्गीततालादि गान्धारादिश्च मूर्छना ॥ ४१७ ॥

द्वितीये प्रेक्षणे गाने ध्रुवायां विनियोजनम् ।

अस्यां षड्जोदीच्यवायां मध्यमो न्यासः । षड्जधैवतावपन्यासौ ।
[शैले ऽक्षराभ्यां प्रथमा द्वितीया तु शसूनुना ॥ ४१८ ॥

तैः पञ्चभिस्तृतीया स्यात्सप्तमी त्वधिकाक्षरैः ।
मुखेन्दुना त्वष्टमी स्यात् षड्भिस्तैर्नवमी कला][1] ॥ ४१९ ॥

इति षड्जोदीच्यवा ॥

अंशाः सप्त स्वराः षड्जमध्यमायां मिथश्च ते ।
सङ्गच्छन्ते निरल्पों ऽशाद्गादृते वादितां विना ॥ ४२० ॥

निलोपे निगलोपे च षाडवौडुविते मते ।
षाडवौडुवयोः स्यातां द्विश्रुती तु विरोधिनौ ॥ ४२१ ॥

गीतितालकलादीनि षाड्जीवन्मूर्छना पुनः ।
मध्यमादिरिह ज्ञेया पूर्ववद्विनियोजनम् ॥ ४२२ ॥

अस्यां षड्जमध्यमायां षड्जमध्यमौ न्यासौ । सप्त स्वरा अपन्यासाः ।

इति षड्जमध्यमा ॥

गान्धारोदीच्यवायान्तु द्वावंशौ षड्जमध्यमौ ।
रिलोपात्षाडवं ज्ञेयं पूर्णत्वेंऽशेतराल्पता ॥ ४२३ ॥

अल्पा निधपगान्धाराः षाडवत्वे प्रकीर्तिताः ।
रिधयोः सङ्गतिर्ज्ञेया धैवतादिश्च मूर्छना ॥ ४२४ ॥

तालश्चञ्चत्पुटो ज्ञेयः कलाः षोडश कीर्तिताः ।
विनियोगो ध्रुवागाने चतुर्थप्रेक्षणे भवेत् ॥ ४२५ ॥

अस्यां गान्धारोदीच्यवायां मध्यमो न्यासः । षड्जधैवतावपन्यासौ ।

इति गान्धारोदीच्यवा ॥

---

[1] अयं सार्धश्लोकः रत्नाकरोदाहृतषड्जोदीच्यवाप्रस्तारगीतसमन्वयाय प्रवृत्तः ।

अंशाः स्यू रक्तगान्धार्यां पञ्च धर्षभवर्जिताः ।
रिमतिक्रम्य सगयोः कार्ये सन्निधिमेलने ॥ ४२६ ॥

रिलोपरिधलोपाभ्यां षाडवौडुवमिष्यते ।
बहुत्वं निधयोरंशः पञ्चमो द्वेष्टि षाडवम् ॥ ४२७ ॥

द्विषन्त्यौडुवितं षड्जनिमपाः सङ्गतौ सगौ ।
पञ्चपाण्यादि षाड्जीवत् ऋषभादिस्तु मूर्छना ॥ ४२८ ॥

तृतीयप्रेक्षणगतध्रुवायां विनियोजनम् ।
अस्यां रक्तगान्धार्यां गान्धारो न्यासः । मध्यमो ऽपन्यासः ।

**इति रक्तगान्धारी ॥**

कैशिक्यामृषभान्येंऽशा निधावंशौ यदा तदा ॥ ४२९ ॥

न्यासः पञ्चम एव स्यादन्यदा द्विश्रुती मतौ ।
अन्ये तु निगपान्न्यासान्निधयोरंशयोर्विदुः ॥ ४३० ॥

रिलोपरिधलोपेन षाडवौडुवितं मतम् ।
रिरल्पो निपबाहुल्यं अंशानां सङ्गतिर्मिथः ॥ ४३१ ॥

षाडवौडुविते द्विष्टः क्रमात्पञ्चमधैवतौ ।
षाड्जीवत्पञ्चपाण्यादि गान्धारादिस्तु मूर्छना ॥ ४३२ ॥

पञ्चमप्रेक्षणगतध्रुवायां विनियोजनम् ।

अस्यां कैशिक्यां गान्धारपञ्चमनिषादा न्यासाः । रिवर्ज्यादि षट् सप्त वा स्वरा अपन्यासाः ।

**इति कैशिकी ॥**

पञ्चमांशा सदा पूर्णा मध्यमोदीच्यवा मता ॥ ४३३ ॥

लक्ष्म शेषं विजानीयाद् गान्धारोदीच्यवागतम् ।
मध्यमादिर्मूर्छना स्यात्तालश्चञ्चत्पुटो मतः ॥ ४३४ ॥

चतुर्थस्य प्रेक्षणस्य ध्रुवायां विनियोजनम् ।

अस्यां मध्यमोदीच्यवायां मध्यमो न्यासः । षड्जधैवतावपन्यासौ ।[1]

## इति मध्यमोदीच्यवा ॥

कार्मारव्यां भवन्त्यंशा निषादरिपधैवताः ॥ ४३५ ॥

बहवो ऽन्तरमार्गत्वादनंशाः परिकीर्तिताः ।
गान्धारो ऽत्यन्तबहुलः सर्वांशस्वरसङ्गतिः ॥ ४३६ ॥

चञ्चत्पुटः षोडशात्र कलाः षड्जादिमूर्छना ।
पञ्चमस्य प्रेक्षणस्य ध्रुवायां विनियोजनम् ॥ ४३७ ॥

अस्यां कार्मारव्यां पञ्चमो न्यासः । अंशा एवापन्यासाः ।

## इति कार्मारवी ॥

अंशो गान्धारपञ्चम्यां पञ्चमः सङ्गतिः पुनः ।
कर्तव्या ऽत्रापि गान्धारीपञ्चम्योरिव भूरिभिः ॥ ४३८ ॥

चञ्चत्पुटः षोडशात्र कला गादिश्च मूर्छना ।
तुर्यप्रेक्षणसम्बन्धिध्रुवागाने नियोजनम् ॥ ४३९ ॥

अस्यां गान्धारपञ्चम्यां गान्धारो न्यासः । ऋषभपञ्चमावपन्यासौ ।

## इति गान्धारपञ्चमी ॥

---

[1] रत्नाकरमूलग्रन्थे अंशोऽयं न दृश्यते ।

आन्ध्र्यामंशा निरिगपा रिगयोर्निधयोस्तथा ।
सङ्गतिर्न्यासपर्यन्तं अंशानुक्रमतो व्रजेत्  ॥ ४४० ॥

षाडवं षड्जलोपेन मध्यमादिश्च मूर्छना ।
पूर्ववत्तु कलातालविनियोगाः प्रकीर्तिताः  ॥ ४४१ ॥

अस्यामान्ध्र्यां गान्धारो न्यासः । अंशा एवापन्यासाः ।

## इत्यान्ध्री ॥

नन्दयन्त्यां पञ्चमोऽशो गान्धारस्तु ग्रहः स्मृतः ।
कैश्चित्तु पञ्चमः प्रोक्तः ग्रहो ऽस्यां गीतवेदिभिः  ॥ ४४२ ॥

मन्द्रर्षभस्य बाहुल्यं षाडवं षड्जलोपतः ।
हृष्यका मूर्छना तालः पूर्ववद् द्विगुणाः कलाः  ॥ ४४३ ॥

विनियोगो ध्रुवागाने प्रथमप्रेक्षणे भवेत् ।

अस्यां नन्दयन्त्यां गान्धारो न्यासः । मध्यमपञ्चमावपन्यासौ ।

## इति नन्दयन्ती ॥

अनुक्ताविह तालः स्यात्त्रिधैवैककलाऽऽदिकः  ॥ ४४४ ॥

मार्गाः क्रमाच्चित्रवृत्तिदक्षिणा गीतयः पुनः ।
मागधी सम्भाविता च पृथुलेत्युदिताः क्रमात्  ॥ ४४५ ॥

योक्ता ऽस्माभिः कलासङ्ख्या सा दक्षिणपथे स्थिता ।
वार्त्तिके द्विगुणा ज्ञेया सैव चित्रे चतुर्गुणा  ॥ ४४६ ॥

सर्वजातिषु जानीयादंशस्वरगतं रसम् ।
दृश्यन्ते सर्व(? जन्य)रागांशास्तदृशैर्जनकजातिषु ॥ ४४७ ॥

ब्रह्मप्रोक्तपदैः सम्यक्प्रागुक्ताः शङ्करस्तुतौ ।
अपि ब्रह्महणं पापाज्जातयः प्रपुनन्त्यमूः ॥ ४४८ ॥

ऋचो यजूंषि सामानि क्रियन्ते नान्यथा यथा ।
तथा सामसमुद्भूताः जातयो वेदसम्मिताः ॥ ४४९ ॥

**इति रत्नाकरोक्तं जातिलक्षणं निरूपितम् ॥**

**अथ हरिपालीयोक्तं जातिलक्षणं लक्ष्यते :—**

तत्रादावार्षभीलक्ष्म कथ्यते हरिभूभुजा ।
निषादेनर्षभेणांऽशो धैवतेनात्र कल्प्यते ॥ ४५० ॥

षड्जेन पञ्चमेनाथ रहितौ षाडवौडुवौ ।
इत्यार्षभी समाख्याता (१) धैवत्यथ निरूप्यते ॥ ४५१ ॥

ऋषभेणात्र कार्यों ऽशो धैवतेन तथैव च ।
षड्जमध्यमयोर्न्यासः[1] तथा चाल्पत्वमंशके ॥ ४५२ ॥

धैवतीति च निर्णीता (२) षाड्जी लक्ष्माथ कथ्यते ।
अंशाः पञ्चस्वरा यत्र निषादर्षभवर्जिताः ॥ ४५३ ॥

अभ्यासश्च गान्धारो विदारी पञ्चमो[1] भवेत् ।
षड्जगान्धारयोः पश्चात् षड्जधैवतयोरपि ॥ ४५४ ॥

---

[1] एतल्लक्षणं भरतशार्ङ्गदेवादिवर्णितलक्षणापेक्षया क्वचिदंशे भिन्नतामेति ।

विधीयते विदार्यत्र निषादश्चौडुवो भवेत् ।
औडुवो नव भेदस्स्यात् षाड्जजातिरितीरिताः (३) ॥ ४५५ ॥

लक्ष्यते षड्जमध्या तु सप्ताप्यंशा स्वरा मताः ।
षड्जश्च मध्यमो न्यासः स्वरो नान्यो विधीयते ॥ ४५६ ॥

अल्पौ निषादगान्धारौ यत्रासा षड्जमध्यमा (४) ।
निर्णीयते निषादिन्या लक्षणं हि सविस्तरम् ॥ ४५७ ॥

निषादर्षभगान्धारा अंशा न्यासो निषादकः ।
धैवतीवदिहान्यत् स्यादेवमुक्ता निषादिनी (५) ॥ ४५८ ॥

षड्जोदीच्यवतीलक्ष्म स्फुटं निर्णीयते ऽधुना ।
अंशा ऋषभगान्धारपञ्चमैर्वजिता स्वराः ॥ ४५९ ॥

अपन्यासाविह तथा भवेतां षड्जधैवतौ ।
ऋषभः पञ्चमश्चापि द्रष्टव्यः क्वचिदेव वा ॥ ४६० ॥

बहुत्वं ऋषभे यस्यां गान्धारश्चाथ पञ्चमः[1] ।
अपन्यास(?अल्पस्वर)इति ख्यातो षड्जोदीच्यवती भवेत्(६)॥४६१॥

कथ्यते षड्जकैशिक्या लक्षणन्तु सविस्तरम् ।
तत्र पूर्वं विधेया स्युः षड्जगान्धारपञ्चमाः ॥ ४६२ ॥

अंशा, न्यासो निषादो ऽत्र पञ्चमः षड्ज एव वा ।
अल्पत्वं ऋषभस्यैव[1] न्यासे गान्धारस्याप्यनल्पता ॥ ४६३ ॥

एनानामृषभस्यैव न्यासे गान्धार इष्यते ।
संपूर्णो ऽमुं स्वरैस्सर्वैः स्यादेवं षड्जकैशिकी (७) ॥ ४६४ ॥

---

[1] एतल्लक्षणं भरतशार्ङ्गदेवादिवर्णितलक्षणापेक्षया भिन्नतामेति ।

षड्जग्रामस्य जातीनामिति लक्षणमीरितम् ।
गान्धार्येवं समाख्याता (८) रक्तगान्धार्यथोच्यते ॥ ४६५ ॥

अपन्यासो मध्यमः स्यान्निषादोंऽशो ऽपि धैवतः ।
बहुत्वमनयोः षड्जगान्धारौ च विदारिणौ ॥ ४६६ ॥

इत्येवं रक्तगान्धारीलक्षणं परिकीर्तितम् (९) ।
निर्णीयते ऽथ गान्धारोदीच्यवालक्षणं स्फुटम् ॥ ४६७ ॥

षड्जमध्यमकावंशावौडुवे नात्र दृश्यते ।
षड्जोदीच्यवतीवच्च शिष्टमस्यास्तु लक्षणम् (१०) ॥ ४६८ ॥

[मध्यमोदीच्यवालक्ष्म ततः परमुदीर्यते ।
अत्रांशः पञ्चमो नित्यं साप्तस्वर्यञ्च दृश्यते ॥ ४६९ ॥

गान्धारोदीच्यवावत् स्यात् शिष्टमस्याश्च लक्षणम् (११) ।][1]
कथ्यते मध्यमालक्ष्म स्वराः पञ्च स्युरंशकाः ॥ ४७० ॥

विना निषादगान्धारौ बहुत्वमनयोस्ततः ।
षड्जमध्यमयोश्चैव मध्यमा ऽपि निरूपिता (१२) ॥ ४७१ ॥

लक्ष्यते पञ्चमी वास्याः अंशावृषभपञ्चमौ ।
न्यासौ षड्जनिषादौ च पश्चादृषभमध्यमौ ॥ ४७२ ॥

विदारिणौ तथाल्पत्वं गान्धारे षड्जमध्ययोः ।
गान्धारस्य निषादस्य मध्यमावच्च हीनता ॥ ४७३ ॥

---

[1] अयं श्लोकार्धः मातृकायां पतितः ।

एवं निरूपितं स्पष्टं पञ्चमीजातिलक्षणम् (१३) ।
गान्धारपञ्चमीलक्ष्म कथ्यते हरिभूभुजा || ४७४ ||

पञ्चमोंऽशो ऽत्र गान्धारो न्यासः स्यादृषभो ऽपि वा ।
गान्धारी पञ्चमीव स्याद्विदार्यादि क्रमोऽत्र च || ४७५ ||

पूर्णस्वरा सदा चैवं प्रोक्ता गान्धारपञ्चमी (१४) ।
लक्ष्यते नन्दयन्त्यत्र न्यासौ मध्यमपञ्चमौ || ४७६ ||

अंशो न्यासश्च गान्धारो पञ्चमोंऽशः प्रकीर्तितः ।
षाडवः षड्जहीनः स्यादौडुवो न भवेदिह || ४७७ ||

मन्द्रः स्यादृषभः सोऽयं लङ्घनीयः क्वचिद्भवेत् ।
नन्दयन्त्येवमाख्याता (१५) कैशिकी चाथ लक्ष्यते || ४७८ ||

अंशाः ऋषभसन्त्यक्ता स्वराः षडिह कीर्तिताः ।
न्यासौ निषादगान्धारावृषभो धैवतः क्रमात् || ४७९ ||

वर्ज्यौ निषादधैवतावंशे विदारी चापि पञ्चमः ।
एष एवं भवेदेतत्कैशिकीजातिलक्षणम् (१६) || ४८० ||

आन्ध्री निरूप्यते यस्यां षड्जमध्यमधैवतैः ।
हीनाः स्वरा इहांशाः स्युः षाडवः षड्जवर्जितः || ४८१ ||

न्यासो गान्धार एवं स्यादान्ध्रीजातिरुदीरिता । (१६)
अथ कार्मारवीलक्ष्म विशदं परिकीर्त्यते || ४८२ ||

---

[1] अयं श्लोकार्धः मातृकायां पतितः ।

षड्जमध्यमगान्धारैः त्यक्ताः सर्वे इहांशकाः ।
पूर्णत्वं पञ्चमो न्यासो गान्धारस्याप्यनल्पता[1] ॥ ४८३ ॥

एवं कार्मारवीलक्ष्म विशदं परिकीर्तितम् ।
मध्यमग्रामजातीनामिदं लक्षणमीरितम् ॥ ४८४ ॥

इति हरिपालीयोक्तजातिलक्षणानि निरूपितानि ॥

एतासामष्टादशजातीनां लक्ष्यप्रपञ्चो सङ्गीतरत्नाकरे द्रष्टव्य इति नात्र लिखितः । एतद्रत्नाकरभारतीयहरिपालीयोक्तजातिप्रपञ्चमध्ये अंशग्रहादिप्रपञ्चस्य रत्नाकरभारतीयोक्तस्यातिविस्तरत्वात् तद्द्वयं परित्यज्य हरिपालीयोक्तांशस्वरादिरूपमेवं निरूप्यते :—

नादश्रुतिस्वरग्राममूर्छनातानसङ्क्रमात् ।
अष्टादश समुद्भूता वक्ष्यन्ते जातयः स्फुटम् ॥ ४८५ ॥

तासामवयवाः संप्रत्युच्यन्ते दशपञ्च च ।
आदौ ग्रहांशन्यासाः स्युरपन्यासविदारिणौ ॥ ४८६ ॥

अल्पत्वञ्च बहुत्वञ्च तारो मन्द्रश्च पूर्णता ।
षाडवौडुवखण्डाश्च खण्डौ पञ्चदश क्रमः ॥ ४८७ ॥

एतेषां लक्षणमथ क्रमेण प्रतिपाद्यते ।
स स्याद्ग्रहः स्वरेणादौ गीयते येन गीतकम् ॥ ४८८ ॥

अंशस्वरेण तेनैव गीयते बहुशो यदि ।[1]
पूर्वस्पृष्टं स्वरं मुक्त्वा एनाद्दश्यन्तु गीयते ॥ ४८९ ॥

---

[1] अयं श्लोकार्धः मातृकायां पतितः ।

ग्रहस्यात्स्पृष्टमुक्तो ऽयं अंशस्तावत्य (?) तानकम् ।
इदं ग्रहस्यैकरूपं अंशस्य बहुधा भवेत् ॥४९० ॥

न्यासः स स्वरमूर्ध्वं यः स्वस्पर्शं विनिवर्त्यते ।
प्रारब्धरागच्छायया यत्र निर्वाहणं भवेत् ॥ ४९१ ॥

अपन्यासः स्वरः सो ऽयं व्याख्यातो गीतवेदिभिः ।
न्यासापन्यासयोर्मध्ये ये दृश्यास्ते विदारिणः ॥ ४९२ ॥

द्वित्रान्वारान् प्रयुक्तस्य अंशस्याल्पत्वमिष्यते ।
अस्यांशस्य बहुत्वं यो बहून्वारान् प्रयुज्यते ॥ ४९३ ॥

उच्चैः स्वरेण यद्गानं स तारः परिकीर्तितः ।
नीचैः स्वरेण मन्द्रः स्यात् स्वरैः पूर्णस्तु सप्तभिः ॥ ४९४ ॥

षड्भिः स्वरेण षड्वर्णात् स्वरैः पञ्चभिरौडुवः ।[1]
स्वरैश्चतुर्भिः खण्डः स्यादर्धखण्डस्त्रिभिःस्वरैः ॥ ४९५ ॥

स्वरद्वयेनं तु कृशः प्रोक्तो हरिभूभुजा ।

## इति जात्यवयवलक्षणम् ॥

## अथ क्रमप्राप्तरत्नाकरोक्तकपाललक्षणानि यथा :—

शुद्धजातिसमुद्भूता कपालान्यधुना ब्रुवे ॥ ४९६ ॥

रागा जनकजातीनां तत्कपालेषु सम्मिताः ।
षड्जो ग्रहांशापन्यासो गो न्यासो ऽतिबहू गमौ ॥ ४९७ ॥

अल्पा रिपनिधा लङ्घ्यो रिः कला द्वादशोदिताः ।
यस्मिन्षाड्जीकपालं तद्गदितं मार्गवेदिभिः[1] ॥ ४९८ ॥

यत्रर्षभों ऽशो ऽपन्यासो मो ऽन्तो गनिपधाल्पता ।
सो ऽत्यल्पो ऽष्टकलं तत्स्यात्कपालं त्वार्षभीगतम् ॥ ४९९ ॥

मध्यमों ऽशो ग्रहो न्यासो ऽपन्यासो धैवतो बहुः ।
यत्राल्पाः सरिगाः लोपाद्रिपयोरौडुवं भवेत् ॥ ५०० ॥

तद्गान्धारीकपालं स्यात्कलाऽष्टकविनिर्मितम् ।
मध्यमों ऽशो निरिगपास्त्वल्पा यत्र कला नव ॥ ५०१ ॥

तन्मध्यमाकपालं स्यादिति निःशङ्कसम्मतम् ।
ऋषभांशं सग्रहञ्च निधषड्जगमाल्पकम् ॥ ५०२ ॥

कपालं पञ्चमीजातिजातमष्टकलं विदुः ।
अत्यल्पर्षभगान्धारं पन्यासं मधभूरि च ॥ ५०३ ॥

षाड्ज्या इव कपालं तद्धैवत्याः स्यात्कलाऽष्टकम् ।
ग्रहांशन्यासषड्जञ्च [रिगाल्पमतिभूरिभिः ॥ ५०४ ॥

निधमैरष्टकलकं स्यान्नैषादीकपालकम् । ][2]
इति सप्तकपालानि गायन् ब्रह्मोदितैः पदैः ॥ ५०५ ॥

---

1 'गीतवेदिभि' रित्यपि पाठः वर्तते ।

2 अयमंशः मातृकायां पतितः ।

स्वरैश्च पार्वतीकान्तस्तुतौ कल्याणभाग्भवेत् ।

इति कपाललक्षणम् ॥

**अथ तदुक्तं कम्बललक्षणं लक्ष्यते :—**

यत्र ग्रहोंऽशो ऽपन्यासः पञ्चमो बहुलस्तु रिः ॥ ५०६ ॥

सो न्यासो मधगान्धारास्त्वल्पास्तत्कम्बलं मतम् ।
पञ्चमीजातिसञ्जातमल्पताबहुतावशात् ॥ ५०७ ॥

स्वराणां बहवो भेदाः तस्य पूर्वैरुदीरिताः ।
प्रीतः कम्बलगानेन कम्बलाय वरं ददौ ॥ ५०८ ॥

पुरा पुरारिरद्यापि प्रीयते तैरतः शिवः ।

इति कम्बललक्षणम् ॥

एतत्सप्तकपालानां पदावलीलक्ष्यलक्षणे सङ्गीतरत्नाकरे द्रष्टव्ये ॥

**अथ रत्नाकरोक्तं गीतिलक्षणं लक्ष्यते :—**

वर्णाद्यलङ्कृता गानक्रिया पदलयान्विता ॥ ५०९ ॥

गीतिरित्युच्यते सा च बुधैरुक्ता च[तुर्विधा][1] ।
मागधी प्रथमा ज्ञेया द्वितीया चार्धमागधी ॥ ५१० ॥

सम्भाविता च पृथुलेत्येतासां लक्ष्म चक्ष्महे ।
गीत्वा कलायामाद्यायां विलम्बितलयं पदम् ॥ ५११ ॥

---

1 अयमंशः मातृकायां पतितः ।

द्वितीयायां मध्यलयं तत्पदान्तरसंयुतम् ।
सतृतीयपदे ते च तृतीयस्यां द्रुते लये || ५१२ ||

इति त्रिरावृत्तपदां मागधीं जगदुर्बुधाः ।

एतासामुदाहरणं न लिखितम् ॥

पूर्वयोः पदयोरर्धे चरमे द्विर्यदोदिते[1] || ५१३ ||

तदा ऽर्धमागधीं प्राहुः, द्विरावृत्तपदान्तरे[2] ।
सङ्क्षेपितपदा भूरिगुरुः सम्भाविता मता || ५१४ ||

भूरिलघ्वक्षरपदा पृथुला सम्मता सताम् ।
यद्वा यथाऽक्षरे युग्मे गुर्वोः प्रथमयोर्यदा || ५१५ ||

एकैकं चित्रमार्गार्हे[3] प्रयुज्य चगणान्वितम् ।
मात्राभिरष्टभिर्युक्तं दक्षिणे ध्रुवकाऽऽदिभिः || ५१६ ||

प्रयुज्यते तदा गीतिर्मागधीत्यभिधीयते ।
तृतीयं लघु युग्मस्य च्छगणार्धयुतं यदा || ५१७ ||

आद्याभ्यामन्तिमाभ्याञ्च मात्राभ्यां सम्प्रयुज्यते ।
ततः प्लुतं सार्धगणयुक्तं कृत्वा प्रयुज्यते || ५१८ ||

---

1 'पूर्वयोः पदयोरर्धं चरमं द्विर्यदोच्यते' इति सिंहभूपालीय पाठः ।

2 'द्विरावृत्तपदां पर' इति कल्लिनाथेन पठितम् ।

3 'चित्रमार्गादि'रिति कल्लिनाथेन स्वीकृतः पाठः ।

ध्रुवकाऽऽदिभिरष्टाभिर्द्विरुक्तान्त्यद्वयेन च ।
तदा ऽर्धमागधी ते द्वे तद्वृत्तालान्तरेष्वपि ॥ ५१९ ॥

सम्भाविता, भूरिगुरुर्द्विकले वार्त्तिके पथि ।
चतुष्कले भूरिलघुर्दक्षिणे पृथुला मता ॥ ५२० ॥

## इति रत्नाकरोक्तं गीतिलक्षणम् ॥

## अथ भारतीयोक्तं गीतिलक्षणं यथा :—

तथा गीतिं प्रवक्ष्यामि खण्डाक्षरि(? छन्दोक्षर)समन्वितम् ।
प्रथमा मागधीगीतिर्द्वितीया चार्धमागधी ॥ ५२१ ॥

सम्भाविता तृतीया च चतुर्थी पृथुला मता ।
त्रिकमार्गणगीता या गीतिः सा मागधी स्मृता[1] ॥ ५२२ ॥

सन्निवृत्तगगीता च विज्ञेया त्वर्धमागधी ।
सम्भाविता च विज्ञेया गुर्वक्षरसमन्विता ॥ ५२३ ॥

लघ्वक्षरे कृता नित्यं पृथुला स्यात्प्रकीर्तिता ।
एतास्तु गीतयः प्रोक्ता ध्रुवायोगं विनैव हि ॥ ५२४ ॥

## इति भारतीयोक्तं गीतिलक्षणम् ॥

## अथ क्रमप्राप्तः रत्नाकरोक्तः रागोद्देशो निगद्यते :—

पञ्चधा ग्रामरागाः स्युः पञ्चगीतिसमाश्रयात् ।
गीतयः पञ्च शुद्धा च भिन्ना गौडी च वेसरा ॥ ५२५ ॥

---

1 'विनिवृत्तप्रवृत्ता या सा ज्ञेया मागधी बुधै'रिति भारतीयमूलग्रन्थपाठः ।

साधारणीति शुद्धा [स्यादवक्रैर्ललितैः स्वरैः ।
भिन्ना वक्रैस्स्वरैः सूक्ष्मै][1]र्मधुरैर्गमकैर्युता ॥ ५२६ ॥

गाढैस्त्रिस्थानगमकैरोहाटीर्ललितैः स्वरैः ।
अखण्डितस्थितस्थानत्रया गौडी मता सताम् ॥ ५२७ ॥

ओहाटी कम्पितैर्मन्द्रैर्मृदुद्रुततरैः स्वरैः ।
हकारौकारयोगेन हन्न्यस्ते चिबुके भवेत् ॥ ५२८ ॥

वेगवद्भिः स्वरैर्वर्णचतुष्के ऽप्यतिरक्तितः ।
वेगस्वरा रागगीतिर्वेसरा चोच्यते बुधैः ॥ ५२९ ॥

चतुर्गीतिगतं लक्ष्म श्रिता साधारणी मता ।
शुद्धादिगीतियोगेन रागाः शुद्धादयो मताः ॥ ५३० ॥

षड्जग्रामसमुत्पन्नः शुद्धकैशिकमध्यमः ।
शुद्धसाधारितः षड्जग्रामो ग्रामे तु मध्यमे ॥ ५३१ ॥

पञ्चमो मध्यमग्रामः षाडवः शुद्धकैशिकः ।
शुद्धा सप्तेति भिन्नास्तु पञ्च कैशिकमध्यमः ॥ ५३२ ॥

भिन्नषड्जश्च षड्जाख्ये, मध्यमे तानकैशिकौ ।
भिन्नपञ्चम इत्येते, गौडकैशिकमध्यमः ॥ ५३३ ॥

1 अयं भागः मातृकायां नोद्धृतः ।

गौडपञ्चमकः षड्जे मध्यमे गौडकैशिकः ।
इति गौडास्त्रयः षड्जे टक्कवेसरषाडवौ ॥ ५३४ ॥

ससौवीरौ मध्यमे तु बोट्टमालवकैशिकौ ।
मालवः पञ्चमान्तो ऽथ द्विग्रामःषड्जकैशिकः[1] ॥ ५३५ ॥

हिन्दोलो ऽष्टौ वेसरास्ते सप्त साधारणास्ततः ।
षड्जे स्याद्रूपसाधारः शको भम्माणपञ्चमः ॥ ५३६ ॥

मध्यमे नर्तगान्धारपञ्चमौ षड्जकैशिकः ।
द्विग्रामः ककुभस्त्रिंशद् ग्रामरागा अमी मताः ॥ ५३७ ॥

## इति ग्रामरागोद्देशः ॥

अष्टोपरागास्तिलकः शकादिष्टक्कसैन्धवः ।
कोकिलापञ्चमो रेवगुप्तः पञ्चमषाडवः ॥ ५३८ ॥

भावनापञ्चमो नागगान्धारो रा(? ना)गपञ्चमः ।

## इत्यष्टौ उपरागाः ॥

श्रीरागनट्टौ बङ्गालौ भासमध्यमषाडवौ ॥ ५३९ ॥
रक्तहंसः कोल्हासः प्रसवो भैरवो ध्वनिः ।

मेघरागः सोमरागः कामोदौ चाम्रपञ्चमः ॥ ५४० ॥

स्यातां कन्दर्पदेशाख्यौ ककुभान्तश्च कैशिकः ।
नट्टनारायणश्चेति रागा विंशतिरीरिताः ॥ ५४१ ॥

---

[1] 'द्विग्रामष्टक्ककैशिक' इति रत्नाकरमूलग्रन्थपाठः ।

सौवीरः ककुभष्टक्कः पञ्चमो भिन्नपञ्चमः ।
टक्ककैशिकहिन्दोलबोट्टमालवकैशिकाः || ५४२ ||

गान्धारपञ्चमो भिन्नषड्जो वेसरषाडवः ।
मालवः पञ्चमान्तश्च तानः पञ्चमषाडवः[1] || ५४३ ||

भाषाणां जनकाः पञ्चदशैते याष्टिकोदिताः ।
भाषाश्चतस्रः सौवीरे सौवीरी वेगमध्यमा || ५४४ ||

साधारिता च गान्धारी ककुभे भिन्नपञ्चमी ।
काम्भोदी[2] मध्यमग्रामा रगन्ती मधुरी तथा || ५४५ ||

शकमिश्रेति षट् तिस्रो विभाषा भोगवर्धिनी ।
आभीरिका मधुकरी तथैकाऽन्तरभाषिका || ५४६ ||

शालवाहनिका टक्के त्रवणा[3] त्रवणोद्भवा ।
वैरञ्जी मध्यमग्रामदेहा मालववेसरी || ५४७ ||

छेवाटी सैन्धवी कोलाहला पञ्चमलक्षिता ।
सौराष्ट्री पञ्चमी वेगरञ्जी गान्धारपञ्चमी || ५४८ ||

मालवी तानवलिता ललिता रविचन्द्रिका ।
ताना ऽम्बाहेरिका दोह्या वेसरीत्येकविंशतिः || ५४९ ||

---

1 मातृकायां पतितः ।

2 रागोऽयं रत्नाकरमूलग्रन्थे 'काम्भोजी'ति व्यवहृतः ।

3 मातृकायां पतितः ।

भाषा स्युरथ देवारवर्धन्यान्ध्री च घूर्जरी ।
भावनीति विभाषाः स्युश्चतस्रः पञ्चमे पुनः ॥ ५५० ॥

कैशिकी त्रावणी तानोद्भवा ऽऽभीरी च घूर्जरी ।
सैन्धवी दाक्षिणात्या ऽऽन्ध्री माङ्गली भावनी दश ॥ ५५१ ॥

इति भाषा विभाषे द्वे भम्माण्यन्धालिके ततः ।
चतस्रः पञ्चमे भिन्ने भाषा धैवतभूषिता ॥ ५५२ ॥

शुद्धभिन्ना च वाराटी विशालेत्यथ कौशली ।
विभाषा मालवभिन्नवलिते टक्ककैशिके ॥ ५५३ ॥

भाषे द्वे द्राविडीत्येका विभाषा प्रेङ्खके नव ।
भाषाः स्युर्वेसरी भूतमञ्जरी[1] षड्जमध्यमा ॥ ५५४ ॥

मधुरी भिन्नपौराली गौडी मालववेसरी ।
छेवाटी पिञ्जरीत्येका बोट्टभाषा तु माङ्गली ॥ ५५५ ॥

बाङ्गाली माङ्गली हर्षपुरी मालववेसरी ।
खञ्जनी गूर्जरी गौडी पौराली चार्धवेसरी ॥ ५५६ ॥

शुद्धा मालवरूपा च सैन्धव्याभीरिकेत्यमूः ।
भाषास्त्रयोदश ज्ञेया विज्ञैर्मालवकैशिके ॥ ५५७ ॥

विभाषे द्वे तु काम्भोदी तद्वद्देवारवर्धनी ।
[गान्धारपञ्चमे भाषा गान्धारी भिन्नषड्जके ॥ ५५८ ॥

गान्धारवल्ली कच्छेल्ली स्वरवल्ली निषादिनी ।
त्रवणा मध्यमा शुद्धा दाक्षिणात्या पुलिन्दिका ॥ ५५९ ॥

---

1 'चूतमञ्जरी' ति रत्नाकरमूलग्रन्थपाठः ।

तुम्बुरा षड्जभाषा च कालिन्दी ललिता ततः ।
श्रीकण्ठिका च बाङ्गाली गान्धारी सैन्धवीत्यमूः ॥ ५६० ॥

भाषाः सप्तदश ज्ञेयाश्चतस्रस्तु विभाषिकाः ।
पौराली मालवा कालिन्द्यपि देवारवर्धनी ][1] ॥ ५६१ ॥

वेसरे षाडवे भाषे द्वे नाद्या बाह्यषाडवा ।
विभाषे पार्वती श्रीकण्ठ्यथ[2] मालवपञ्चमे ॥ ५६२ ॥

भाषास्तिस्रो वेदवती भावनी च विभावनी ।
तने तानोद्भवा भाषा भाषा पञ्चमषाडवे ॥ ५६३ ॥

पोता भाषां शकामेके रेवगुप्ते विदुर्विदः ।
विभाषा पल्लवी भासवलिता किरणावली ॥ ५६४ ॥

शकाद्या वलितेत्येताः तिस्रस्त्वन्तरभाषिकाः ।
चतस्रोऽनुक्तजनका बृहद्देश्यामिमाः स्मृताः ॥ ५६५ ॥

एवं षण्णवतिर्भाषा विभाषा विंशतिस्तथा ।
चतस्रोऽन्तरभाषाः स्युः शार्ङ्गदेवस्य सम्मताः ॥ ४६६ ॥

भाषा मुख्या स्वराख्या च देशाख्या चोपरागजा ।
चतुर्विधा मतङ्गोक्ता मुख्याऽन्येत्युपजीवनी[3] ॥ ५६७ ॥

स्वरदेशाख्यया ख्याता स्वराख्या देशजा क्रमात् ।
अन्योपरागजा ताभ्यो याष्टिकेनोदिताः पुनः ॥ ५६८ ॥

---

1 मातृकायां पतितः ।

2 'श्रीकण्ठ्यथ' इति रत्नाकरमूलग्रन्थपाठः ।

3 'अनन्योपजीवनी' ति रत्नाकरमूलग्रन्थपाठः ।

सङ्कीर्णा देशजा मूला छायामात्रेति नामभिः ।
शुद्धाऽऽभीरी रगन्ती च त्रिधा मालववेसरी ॥ ५६९ ॥

मुख्याः षडिति शेषास्तु सुज्ञाताः स्फुटलक्षणाः ।
नामसाम्यन्तु कासाञ्चिद् भिन्नानामपि लक्ष्यतः ॥ ५७० ॥

इति ग्रामरागोपरागभाषाविभाषान्तरभाषाविवेकः ॥

अथ रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गोद्देशक्रमः कथ्यते :—

केपाञ्चिन्मतमाश्रित्य कुरुते सोढलात्मजः ।
रञ्जनाद्रागता भाषारागाङ्गादेरपीष्यते ॥ ५७१ ॥

देशीरागतया प्रोक्तं रागाङ्गादि चतुष्टयम् ।
प्रसिद्धग्रामरागाद्याः केचिद्देशीत्यपीरिताः ॥ ५७२ ॥

तत्र पूर्वप्रसिद्धानामुद्देशः क्रियतेऽधुना ।
शङ्कराभरणो घण्टारवो हंसकदीपकौ ॥ ५७३ ॥

रीतिः पूर्णाटिका[1] लाटी पल्लवीति[2] बभाषिरे ।
रागाङ्गान्यष्ट गाम्भीरी वेहारी श्वसितोत्पली ॥ ५७४ ॥

गोली नादान्तरी नीलोत्पली छाया तरङ्गिणी ।
गान्धारगतिवेरज्यावित्येकादश मेनिरे ॥ ५७५ ॥

1 ‘ कर्णाटिके ’ति रत्नाकरमूलग्रन्थपाठः ।

2 ‘ पाञ्चाली ’त्यपि पाठः वर्तते ।

भाषाङ्गान्यथ भावक्रीस्वभावक्रीशिवक्रियः ।
मरुवक्री[1] त्रिणेत्रक्रीकुमुदक्रीहनुक्रियः[2] || ५७६ ||

ओजक्रीन्द्रक्रियौ नागकृतिर्धन्यकृतिस्तथा ।
विजयक्रीः क्रियाङ्गानि द्वादशेति जगुर्बुधाः || ५७७ ||

त्रीण्युपाङ्गनि पूर्णाटो देवालश्च गुरञ्जिका ।
चतुस्त्रिंशदिमे रागाः प्राक्प्रसिद्धाः प्रकीर्तिताः || ५७८ ||

अथाधुना प्रसिद्धानामुद्देशः क्रियतेऽधुना ।
मध्यमादिर्मालवश्रीस्तौण्डी बङ्गालभैरवौ || ५७९ ||

वराटी गूर्जरी[3] गौडकोलाहलवसन्तकाः ।
धन्नासी देशिकाख्या च[4] रागाङ्गानि त्रयोदश || ५८० ||

डोम्बक्री सावरी वेलावुली प्रथममञ्जरी ।
आदिकामोदिका नागध्वनिः शुद्धवराटिका || ५८१ ||

नट्टा कर्णाटबङ्गालो भाषाङ्गानि नवाब्रुवन् ।
क्रियाङ्गत्रितयं रामकृतिर्गौडकृतिस्तथा || ५८२ ||

देवक्रीरित्यथोपाङ्गसप्तविंशतिरुच्यते ।
कौन्तली द्राविडी सैन्धव्यवस्थानवराटिका[5] || ५८३ ||

---

1 'मरुकक्री 'ति रत्नाकरमूलग्रन्थपाठः । मकरक्रीति च ।

2 'दनुक्री'ति रत्नाकरमूलग्रन्थपाठः ।

3 रागोऽयं अस्मिन्ग्रन्थे गुर्जरी, घूर्जरीतिच व्यवहृतः ।

4 'देशिदेशाख्या ' इति रत्नाकरमूलग्रन्थपाठस्साधुः ।

5 'उपस्थानवराटी 'ति रत्नाकरमूलग्रन्थपाठः ।

हरस्वरवराटी[1] च स्यात्प्रतापवराटिका ।
वराट्यः षडिति च्छायातुरुष्काद्ये तु तौण्डिके ॥ ५८४ ॥

महाराष्ट्री च सौराष्ट्री दक्षिणा द्राविडीत्यमूः ।
उक्ताश्चतस्रो गुर्जर्यो भुञ्जिका स्तम्भतीर्थिका ॥ ५८५ ॥

छायाप्रतापोपपदे वेलावुल्यौ च भैरवी ।
कामोदासिह्मली छायानट्टा रामकृतिस्तथा ॥ ५८६ ॥

मल्लातिका च मल्लारी मल्लारो गौडकास्तथा ।
कर्णाटो देशवालश्च तौरुष्कद्राविडाविति ॥ ५८७ ॥

एते ऽधुना प्रसिद्धाः स्युर्द्विपञ्चाशन्मनोरमाः ।
सर्वेषामिति रागाणां मिलितानां शतद्वयम् ॥ ५८८ ॥

चतुःषष्ट्यधिकं ब्रूते शार्ङ्गी श्रीकरणाग्रणीः ।

**इति सङ्गीतरत्नाकरोक्तः रागोद्देशप्रपञ्चः ॥**

**अथ हरिपालीयोक्तः रागोद्देशो निरूप्यते :—**

[ये जातिभ्यः समुद्भूताः शुद्धरागा मनोहराः ॥ ५८९ ॥

उद्देशः क्रियते त्वेषां हरिपालमहीभुजा][2] ।
षाडवः पञ्चमो ग्रामौ षड्जमध्यमपूर्वकौ ॥ ५९० ॥

साधारितः कैशिकश्चः तथा कैशिकमध्यम ।
सङ्गीतविद्भिः सप्तैते शुद्धरागाः प्रकीर्तिताः ॥ ५९१ ॥

---

1 'हतस्वरवराटी 'ति पाठस्साधुः ।

2 अयं श्लोकः मातृकायां पतितः ।

भिन्नषड्जो भिन्नतानो भिन्नकैशिकमध्यमः ।
भिन्नपञ्चमनामा च तथाऽन्यो भिन्नकैशिकः ॥ ५९२ ॥

भिन्नरागा इति प्रोक्ताः पञ्चैते पूर्वसूरिभिः ।
गौडपञ्चमनामा च तथा ऽन्यो गौडकैशिकः ॥ ५९३ ॥

गौडकैशिकमध्यश्च त्रयो गौडाः प्रकीर्तिताः ।
षाडवो बोट्टरागश्च तथा मालवपञ्चमः ॥ ५९४ ॥

सौवीरष्टक्करागश्च हिन्दोलष्टक्ककैशिकः ।
कैशिको मालवाद्यश्चेत्यष्टौ वेसरसंज्ञकाः ॥ ५९५ ॥

नटा[1]ख्यश्शकसंज्ञश्च ककुभः षड्जकैशिकः ।
अम्भणः पञ्चमो नाम्ना रूपसाधारितस्तथा ॥ ५९६ ॥

गान्धारपञ्चमश्चेति सप्त साधारिता मताः ।
टक्को सैन्धवसंज्ञश्च तथा पञ्चमषाडवः ॥ ५९७ ॥

अपरो र(? ना)गगान्धारस्तिलकः शकपूर्वकः ।
उपरागाः षडेते स्युः सर्वे षट्त्रिंशदीरिताः ॥ ५९८ ॥

मध्यमादिर्भवेत्पूर्वं शङ्कराभरणस्ततः ।
तोण्डिरो भैरवश्चैव तथा हिन्दोल इत्यपि ॥ ५९९ ॥

मार्गहिन्दोलनामा च बङ्गालः शुद्धपूर्वकः ।
गुण्डक्री पूर्वकः पश्चात् श्रीरागो गौड इत्यपि ॥ ६०० ॥

[1] 'नर्ते 'ति हरिपालीयमूलग्रन्थपाठः ।

तथा ऽऽग्रपञ्चमो दीपस्तथा घण्टारवाभिधः ।
गुर्जरी सोमरागश्च धन्याशी देशिका तथा ॥ ६०१ ॥

देशाख्या मालवश्रीश्च वराटीत्यपरा तथा ।
रागाङ्गान्येवमुक्तानि विंशतिस्तत्र लक्षणम् ॥ ६०२ ॥

अथ [भाषाङ्][1]गरागाणामुद्देशः कथ्यते मया ।
कैशिकी प्रथमा वेलावुली शुद्धवराटिका ॥ ६०३ ॥

आदिकामोदिकानामा ऽपरो नाटेति विश्रुता ।
ततः कर्णाटबङ्गालः सावरी ललिता तथा ॥ ६०४ ॥

अन्धालिका ऽपरा गौली त्रावणी सैन्धवीति च ।
रागध्वनिस्तथा ऽऽभीरी शुद्धाभीरी तथैव च ॥ ६०५ ॥

भिन्नाभीरी ततस्त्वन्या काम्भोजीसंज्ञिका परा ।
श्रीकर्णी च बृहत्पूर्वा दाक्षिणात्येति विश्रुता ॥ ६०६ ॥

लघुपूर्वा दाक्षिणात्या तथा दोम्बकृतिः पुनः ।
सौराष्ट्री सैन्धवीत्येका ततो ऽन्यापि च सैन्धवी ॥ ६०७ ॥

पौराली भिन्नपौराली भम्माणीत्यभिसंश्रिता ।
अनन्तरं मधुकरी कालिन्दी च पुलिन्दिका ॥ ६०८ ॥

रगन्ती वेगरञ्जी च सालवाहनिका ऽपरा ।
प्रथमाद्या मञ्जरी च नट्टनारायणस्तथा ॥ ६०९ ॥

---

[1] मातृकायां पतितः ।

नीलोत्पली च कच्छोली चौहा (?) चोत्पलिनी परा[1] ।
खसिकाख्या ततश्छाया गुरञ्जीति समीरिता ॥ ६१० ॥

तरङ्गिणी च गान्धारगतिर्गोली ध्वनिस्तथा ।
नादान्तरी च रागङ्गैर्भाषाङ्गानामनुक्रमात् ॥ ६११ ॥

सप्ताधिका समुद्दिष्टा चत्वारिंशन्मनीषिभिः ।
ततः परमुपाङ्गानामुद्देशः क्रियते मया ॥ ६१२ ॥

सैन्धवाद्यावराटी स्यात्कुन्तलोपपदा परा ।
अवस्थानवराटी च वराटी द्राविडादिका ॥ ६१३ ॥

प्रतापोपपदा चैका हतस्वरवराटिका ।
छायातोण्डी ततस्तोण्डी तुरुष्कप्रथमा ऽपरा ॥ ६१४ ॥

महाराष्ट्रीगूर्जरी च ततस्सौराष्ट्रगुर्जरी ।
गूर्जरी दाक्षिणात्या च भवेद् द्राविडगूर्जरी ॥ ६१५ ॥

कर्णाटोपपदा गौडी गौडो ऽन्यो देशवालकः ।
गौडो द्राविडपूर्वो ऽथ तुरुष्कप्रथमो परः ॥ ६१६ ॥

छायात्रेलावुलीत्येका प्रतापोपपदा ऽपरा ।
आन्दोलिका च भुञ्जी च भैरवी स्यादनन्तरम् ॥ ६१७ ॥

---

1 'सौहार्युत्कलिका परे' इति हरिपालीयमूलग्रन्थपाठः ।

ततः सिम्हालिकामोदा देवाल इति संज्ञितः ।
मल्वारीति च मल्वारः मधुरी परिकीर्तिता[1] ॥ ६१८ ॥

पूर्णाटस्तदनुप्रोक्तः छायानट्टा तथा परा ।
भल्लाता च गुरुञ्जी च तथा रामकृतिः परा ॥ ६१९ ॥

इत्युपाङ्गानि लक्ष्यन्ते चैकत्रिंशदथ क्रमात् ।

अथ क्रियाङ्गानि :—

कृतिः स्वभावपूर्वा स्याद्देवपूर्वा कृतिस्तथा ॥ ६२० ॥

त्रिनेत्रकृतिरित्येषां कथ्यते लक्षणं क्रमात् ।

**इति हरिपालीयोक्तः रागोद्देशः ॥**

**स्वरमेलकलानिधौ (रागोद्देशः) :—**

[एतेषु जाता ये रागा उत्तमा मध्यमा अपि ॥ ६२१ ॥

अधमाश्चापि सकलाः कथ्यन्ते ते विवेकतः][2] ।
मुखारी शुद्धनाटी च रागो मालवगौलकः ॥ ६२२ ॥

ततः शुद्धवराली च गूर्जरी ललितस्तथा ।
शुद्धरामक्रिया शुद्धवसन्तो भैरवी तथा ॥ ६२३ ॥

---

1 'पञ्चममुहुरिति परिकीर्तिते'ति मातृकापाठः ।
'पश्चाहुरितिकीर्तिते'ति हरिपालीयमूलग्रन्थपाठः ।

[2] आदर्शपुस्तकेषु वाक्यरूपेणैव दर्शितम् ।

हिन्दोलरागः श्रीरागो रागः कन्नडगौलकः ।
सामन्तरागो देशाक्षी धन्यासी बवुलीति च ॥ ६२४ ॥

आहरी चाथ मल्वारी मालवश्रीस्ततः परम् ।
सालङ्गनाटा चेत्येव विपुला ह्युत्तमा मताः ॥ ६२५ ॥

असङ्कीर्णतया लोके रागा विंशतिरेव च ।
गीतप्रबन्धकालापठाययोग्या भवन्ति हि ॥ ६२६ ॥

इत्युत्तमरागोद्देशः ॥

केदारगौलः काम्भोजी बङ्गालः कन्नडाह्वयः ।
वेलावुलिर्मध्यमादिर्नारणी रीतिगौलकः ॥ ६२७ ॥

नादरामक्रिया पाडिर्भूपाली रेवगुप्तिकः ।
गुण्डक्रिया च हेज्जुज्जी वसन्तादिश्च भैरवी ॥ ६२८ ॥

रागः सामवराली चेत्येते पञ्चदशैव च ।
रागाः प्रबन्धखण्डार्हा मध्यमाश्चाल्पकास्तथा ॥ ६२९ ॥

इति मध्यमरागोद्देशः ॥

सौराष्ट्रो मेचबौली च च्छायागौलः कुरञ्जिका ।
सिन्धुरामक्रिया गौडी देशी मङ्गलकौशिकः ॥ ६३० ॥

पूर्वगौलस्सोमरागो आन्धाली फलमञ्जरी ।
शङ्कराभरणो देवगान्धारी दीपकस्ततः ॥ ६३१ ॥

नटनारायणी शुद्धभैरवी भिन्नषड्जकः ।
स्यात्कुन्तलवराली च रागस्सारङ्गभैरवी ॥ ६३२ ॥

शुद्धबङ्गालको नागध्वनिर्घण्टारवस्ततः ।
मार्गहिन्दोलकश्छायानट्टा देवक्रियापिच ॥ ६३३ ॥

नारायणी गौलरागस्ततस्तौण्डी वराटिका ।
तुरुष्कतोण्डीरागश्च रागस्सावेरिका तथा ॥ ६३४ ॥

आर्द्रदेशीत्यादयश्च रागाः स्युरधमा मताः ।

इत्यधमरागोद्देशः ॥

सर्वेप्येते पुरोक्तेषु मध्यमेषूत्तमेषु च ॥ ६३५ ॥

अन्तर्भूताश्च सङ्कीर्णाः पामरग्रामकाश्च ते ।
ठायालापप्रबन्धानामयोग्या बहुलाश्च ते ॥ ६३६ ॥

तस्मान्न ते परिग्राह्या रागाः सङ्गीतकोविदैः ।

**अथ क्रमप्राप्तानि रत्नाकरहरिपालीयोक्तानि रागलक्षणान्युच्यन्ते :-**

तत्रादौ ग्रामरागाणां केषाञ्चिल्लक्ष्म चक्ष्महे ॥ ६३७ ॥

देशीरागादिहेतूनां शेषाणां तत्र तत्र तु ।
षड्जमध्यमया जातः तारषड्जग्रहांशकः ॥ ६३८ ॥

निगाल्पो मध्यमन्यासः पूर्णः षड्जादिमूर्छनः ।
अवरोहिप्रसन्नान्तालङ्कृतो रविदैवतः ॥ ६३९ ॥

वीररौद्ररसे गेयः प्रहरे वासरादिमे ।
विनियुक्तो गर्भसन्धौ शुद्धसाधरितो बुधैः ॥ ६४० ॥

नोक्ते करणवर्तन्यौ प्रबन्धान्तर्गतेरिह ।
मतङ्गादिमताद्भूमो भाषाऽऽदिष्वेव रूपकम् ॥ ६४१ ॥

सा पा धां रीपापाधारी पाधा पाधा सा सा । पधानीधा पा मां मां रिपाधा रिपाधा रिपाधा । पाधासासा । धामारि गामगरिं धपाधारि पाधारि पाधा पाधा सासा । रिगामाधमा निधपा मामा ।

इत्यालापः ॥

सस पप धध रिरि पप धस सासा २ । रिरि पप धनि पप रिरि पधस सा सा सा २ । धध मंमं गारि गम रिग मग रिग मग रिग सां सां । पस धस रिग ससा * पाधा निधप मां मां ।

इति करणम् ॥

सा सा धा नी पा पा पा पा ।
उ द य गि रि शि ख र
धा धा नी नी रीं रीं पा पा ।
शे ख र तु र ग खु
री पा पा पा धा नी पा मा ।
र क्ष त वि भि न्न
धा मा धा सां सां सां सां सां ।
घ न ति मि रः

धा धा सा धा सा री गा सा ।
ग ग न त ल स क ल
री गा पा पा पा पा पा पा ।
वि लु लि त स ह स्र
धा मा धा मा सां सां सां सां ।
कि र णो ज य तु
सा धा निध पा मा मा मा मा ।
भा नुः

इत्याक्षिप्तिका ॥

एतत्प्रकारेण अन्येषां रागाणां लक्ष्याणि सङ्गीतरत्नाकरे द्रष्टव्यानीति ग्रन्थविस्तरभीरुणा मुम्मडिचिक्कभूपालेन नात्र लिखितानि ॥

हरिपालीये—

षड्जमध्यमया सृष्टः शुद्धसाधारितो भवेत् ।
तारषड्जग्रहांशाद्यवरोह्यत्र च वर्णकः ॥ ६४२ ॥

अलङ्कारः प्रसन्नान्त एवं साधारितो मतः ।

इति शुद्धसाधारितः ॥१॥

रत्नाकरे—

षड्जमध्यमया सृष्टस्तारषड्जग्रहांशकः ॥ ६४३ ॥

सम्पूर्णो मध्यमन्यासः षड्जापन्यासभूषितः ।
अवरोहिप्रसन्नादि[1]भूषः षड्जादिमूर्छनः ॥ ६४४ ॥

काकल्यन्तरसंयुक्तो वीरे रौद्रे ऽद्भुते रसे ।
विनियुक्तः प्रतिमुखे वर्षासु गुरुदैवतः ॥ ६४५ ॥

गेयो ऽह्नः प्रथमे यामे षड्जग्रामाभिधो बुधैः ।

—हरिपालीये

षड्जमध्यमया सृष्टः षड्जग्रामः प्रकीर्त्यते ॥ ६४६ ॥

तारषड्जग्रहांशो ऽयं स्वरैस्सम्पूर्ण इष्यते ।
मध्यमन्याससंयुक्तः षड्जापन्यासशोभितः ॥ ६४७ ॥

सावरोहिप्रसन्नान्तस्तथा षड्जादिमूर्छनः ।
काकल्यन्तरसंयुक्तः षड्जग्रामो भवेदिति ॥ ६४८ ॥

इति षड्जग्रामरागः ।।२।।

रत्नाकरे—

कार्मारव्याश्च कैशिक्याः सञ्जातः शुद्धकैशिकः ।
तारषड्जग्रहांशश्च पञ्चमान्तः सकाकली ॥ ६४९ ॥

सावरोहिप्रसन्नान्तः पूर्णः षड्जादिमूर्छनः ।
वीररौद्राद्भुतरसः शिशिरे भौमवल्लभः ॥ ६५० ॥

---

1 'प्रसन्नान्त' इति रत्नाकरमूलग्रन्थपाठः ।

गेयो निर्वहणे यामे प्रथमे ऽह्नो मनीषिभिः ।

हरिपालीये—

कार्मारवीकैशिकीभ्यां सृष्टः स्यात् शुद्धकैशिकः ॥ ६५१ ॥

तारषड्जग्रहांशो ऽयं पञ्चमान्तः सकाकली ।
वर्णो ऽवरोहालङ्कारः प्रसन्नान्तो भवेदिह ॥ ६५२ ॥

सम्पूर्णो मूर्छितः षड्जे स्यादेवं शुद्धकैशिकः ।

इति शुद्धकैशिकरागः ॥३॥

रत्नाकरे—

षड्जमध्यमिकोत्पन्नो भिन्नकैशिकमध्यमः ॥ ६५३ ॥

षड्जग्रहांशो प (? म )न्यासो मन्द्रसान्तो ऽथवा भवेत् ।
षड्जादिमूर्छनः पूर्णः सञ्चारिणि सकाकली ॥ ६५४ ॥

प्रसन्नादियुतो दानवीरे रौद्रे ऽद्भुते रसे ।
दिनस्य प्रथमे यामे प्रयोज्यः सोमदैवतः ॥ ६५५ ॥

हरिपालीये—

षड्जमध्यमया सृष्टो भिन्नकैशिकमध्यमः ।
षड्जो ऽशग्रहयोर्न्यासे मध्यमो मन्द्रतारयोः ॥ ६५६ ॥

[षड्जस्वरो भवेत्पश्चात् षड्जाद्याश्रितमूर्छनः[1] ।
पूर्णः सञ्चारिवर्णो ऽयं काकलीसङ्गतः किल ॥ ६५७ ॥

---

1 'षड्जान्ताश्रितमूर्छन ' इति भतरकोशपाठः ।

सप्रसन्नान्त इत्युक्तो भिन्नकैशिकमध्यमः ।][1]

इति भिन्नकैशिकमध्यमरागः ॥४॥

रत्नाकरे—

मध्यमापञ्चमीजातः पञ्चमांशग्रहो ऽल्पपरिः ॥ ६५८ ॥

रिहीनो बा मध्यमान्तो मध्यमाल्पः सकाकली ।
सञ्चारिणि प्रसन्नादिमण्डितो ऽन्तिममूर्छनः ॥ ६५९ ॥

प्राग्यामे करुणे गेयो भिन्नतानः शिवप्रियः ।

हरिपालीये—

जातो मध्यमपञ्चम्योर्भिन्नतान उदीर्यते ॥ ६६० ॥

पञ्चमांशग्रहश्च स्यादृषभस्वरवर्जितः ।
मध्यमाल्पः[2] काकलीमान् वर्णः सञ्चारिकाभिधः ॥ ६६१ ॥

प्रसन्नान्ताकृताकल्पो भवेदन्तिममूर्छनः ।
इत्येवं स्फुटमाख्यातं भिन्नतानस्य लक्षणम् ॥ ६६२ ॥

इति भिन्नतानरागः ॥५॥

रत्नाकरे—

कैशिकीकार्मारवीभ्यामुद्भूतो भिन्नकैशिकः ।
षड्जग्रहांशो पन्यासः[3] सम्पूर्णः काकलीयुतः ॥ ६६३ ॥

---

1 हरिपालीयमूलमातृकायां न दृश्यते ।

2 ' मध्यमान्त ' इति भरतकोशपाठः ।

3 ' षड्ग्रहांशापन्यास ' इति रत्नाकरमूलग्रन्थपाठः ।

मन्द्रभूरिःससञ्चारी प्रसन्नादिविभूषणः ।
षड्जादिमूर्छनो दानवीरे रौद्रे ऽद्भुते रसे ॥ ६६४ ॥

गेयो ऽह्नः प्रथमे यामे शिशिरे शिववल्लभः ।

हरिपालीये —

कार्मारव्याञ्च कैशिक्यामुद्भूतो भिन्नकैशिकः ॥ ६६५ ॥

षड्जग्रहांशको न्यासे पञ्चमस्वरपूरितः ।
काकलीयुक् च मन्द्रास्या(?मन्द्रस्वरा)ढ्यो सञ्चारी चात्र दृश्यते ॥ ६६६ ॥

प्रसन्नादिसमायुक्तः षड्जाद्याश्रितमूर्छनः ।
भिन्नकैशिक इत्येवं कथितो हरिभूभुजा ॥ ६६७ ॥

इति भिन्नकैशिकरागः ॥६॥

रत्नाकरे—

षड्जमध्यमया सृष्टो गौडकैशिकमध्यमः ।
षड्जग्रहांशो प ( ? म )न्यासः पूर्णः काकलिनायुतः ॥ ६६८ ॥

प्रसन्नमध्येनारोहिवर्णः षड्जादिमूर्छनः ।
भयानके च वीरादौ रसे शीतांशुदैवतः ॥ ६६९ ॥

यामद्वये मध्यमे ऽह्नो गेयो निःशङ्ककीर्तितः ।

हरिपालीये—

षड्जग्रामस्य सम्बद्धो गौडकैशिकमध्यमः ॥ ६७० ॥

षड्जमध्यमया सृष्टो षड्जमध्यग्रहांशकः ।
मध्यमन्यास [रुचिरो निषादे काकलीयुतः ॥ ६७१ ॥

सम्पूर्णश्च भवेदेवं गौडकैशि][1]क मध्यमः ।

इति गौडकैशिकमध्यमरागः ॥७॥

रत्नाकरे—

स ( ? ध )ग्रहो धैवतीषड्जमध्यमाजातिसम्भवः ॥ ६७२ ॥

पां ( ? धां )शो मान्तस्तथा गौडपञ्चमः पञ्चमोज्झितः ।
काकल्यन्तरसंयुक्तो मध्यमादिक[2]मूर्छनः ॥ ६७३ ॥

प्रसन्नमध्येनारोहिवर्णः सौरि[3]स्मरप्रियः ।
भयानके च बीभत्से विप्रलम्भे रसे भवेत् ॥ ६७४ ॥

उद्भटे नटने गेयो ग्रीष्मे ऽह्नो मध्ययामयोः ।

हरिपालीये—

षड्जग्रामेण सम्बद्धः कथ्यते गौडपञ्चमः ॥ ६७५ ॥

धैवतीषड्जमध्यमाभ्यामुत्पन्नश्चांशके ग्रहे ।
धैवतो मध्यमन्यासः काकल्यन्तरसंयुतः ॥ ६७६ ॥

---

1 हरिपालीयमूलग्रन्थे पतितः ।

2 'शौरी 'ति कल्लिनाथेन पठितम् ।

3 'धैवतादिक' इति रत्नाकरमूलग्रन्थपाठः ।

कार्यौ निषादगान्धारौ पञ्चमो न भवेदिह ।
षाडवः स्यादयं प्रोक्तो गौडपञ्चमनामकः ॥ ६७७ ॥

इति गौडपञ्चमः ॥ ८ ॥

रत्नाकरे—

उद्भूतः कैशिकीषड्जमध्यमाभ्यां ग्रहांशसः ।
सकाकली पञ्चमान्तः पूर्णः षड्जादिमूर्छनः ॥ ६७८ ॥

आरोहिणि प्रसन्नादिभूषितः करुणे रसे ।
वीरे रौद्रेऽद्भुते गेयः शिशिरे शङ्करप्रियः ॥ ६७९ ॥

दिनस्य पञ्चमे[1] यामे द्वितीये गौडकैशिकः ।

हरिपालीये—

कैशिकी षड्जमध्याभ्यामुत्पन्नो गौडकैशिकः ॥ ६८० ॥

षड्जग्रहादिसंयुक्तः काकलीकलितस्तथा ।
पञ्चमान्तयुतस्तारे पञ्चमः पूर्ण एव च । ॥ ६८१ ॥

षड्जादिमूर्छनो वर्णः आरोह्यत्र प्रशस्यते ।
अलङ्कारः प्रसन्नान्तः स्यादेवं गौडकैशिकः ॥ ६८२ ॥

इति गौडकैशिकः ॥ ९ ॥

रत्नाकरे—

वेसरः षाडवः षड्जमध्यमाजातिसम्भवः ।
मध्यमांशग्रहन्यासः काकल्यन्तरराजितः ॥ ६८३ ॥

---

[1] 'मध्यमे' इति रत्नाकरमूलग्रन्थपाठः ।

सारोही सप्रसन्नादिर्मध्यमादिकमूर्छनः ।
सम्पूर्णः शान्तशृङ्गारहास्येषूशनसः प्रियः ॥ ६८४ ॥

दिनस्य पश्चिमे यामे गेयः श्रीशार्ङ्गिणोदितः ।

हरिपालीये—

षड्जमध्यमाजात्याऽसौ सृष्टो वेसरषाडवः ॥ ६८५ ॥

ग्रहेंऽशे मध्यमो न्यासे काकल्यन्तरसंयुतः ।
सावरोहीप्रसन्नान्तो मध्यमादिकमूर्छनः ॥ ६८६ ॥

सम्पूर्णो लक्षितश्चायं एवं वेसरषाडवः ।

इति वेसरषाडवः ॥१०॥

रत्नाकरे—

बोट्टः स्यात्पञ्चमीषड्जमध्यमाभ्यां ग्रहांशपः ॥ ६८७ ॥

मान्तो ऽल्पगः काकलिमान् पञ्चमादिकमूर्छनः ।
आरोहिणि प्रसन्नान्तालङ्कृतः प्रथम(? सकल)स्वरः ॥ ६८८ ॥

अन्त्ये ऽह्नः प्रथमे (? प्रहरे)गेयो हास्यशृङ्गारयोस्ततः ।
उत्सवे विनियोक्तव्यो भवानीपतिवल्लभः ॥ ६८९ ॥

हरिपालीये—

पञ्चमीषड्जमध्याभ्यां बोट्टरागः प्रजायते ।
पञ्चमो स्याद्ग्रहे चांशे मध्यमान्तो भवेदयम् ॥ ६९० ॥

गान्धाराल्पः काकलीयुक् पञ्चमादिकमूर्छनः ।
सावरोही प्रसन्नान्तः सम्पूर्णो ऽयमितीरितः ॥ ६९१ ॥

इति बोट्टः ॥११॥

रत्नाकरे—

मध्यमापञ्चमीजातिजातो मालवपञ्चमः ।
पञ्चमांशग्रहन्यासो हृष्यकामूर्छनान्वितः ॥ ६९२ ॥

सारोही सप्रसन्नान्तः गान्धाराढ्यः[1] सकाकली ।
विप्रलम्भे कञ्चुकिनः प्रवेशे केतुदैवतः ॥ ६९३ ॥

गेयो ऽह्नः पश्चिमे यामे हास्यशृङ्गारवर्धनः ।

हरिपालीये—

मध्यमापञ्चमीजातो भवेन्मालवपञ्चमः ॥ ६९४ ॥

पञ्चमांशग्रहन्यासो ममन्द्राश्रित[2]मूर्छनः ।
सावरोही प्रसन्नान्तो गान्धाराल्पः सकाकली ॥ ६९५ ॥

इत्येवं कोहलः प्राह रागो मालवपञ्चमः ।

इति मालवपञ्चमः ॥१२॥

रत्नाकरे—

जातो निषादिनीषड्जमध्यमाभ्यां ग्रहांशसः ॥ ६९६ ॥

---

1 'गान्धारोऽल्प' इति रत्नाकरमूलग्रन्थपाठः ।

2 'मध्यमाश्रित' इति हरिपालीयमूलग्रन्थपाठः ।

मन्यासो रूपसाधारो ऽल्परिपः काकलीयुतः ।
प्रसन्नमध्यालङ्कारः पूर्णः षड्जादिमूर्छनः ॥ ६९७ ॥

अवरोहिणि वर्णे स्याद्वीरे रौद्रे ऽद्भुते रसे ।
प्रयोज्यो वीरकरुणे सवितुः प्रीतये सदा ॥ ६९८ ॥

हरिपालीये—

सम्भूतः षड्जमध्यायां निषादिन्यां तथैव च ।
रूपसाधारितः षड्जग्रहन्याससमन्वितः ॥ ६९९ ॥

मध्यमांशः पञ्चमे च ऋषभे स्वल्पतांगतः ।
सकाकलिकः प्रसन्नमध्यालङ्कारभूषितः ॥ ७०० ॥

स्वरैः पूर्णश्च षड्जादिमूर्छनासङ्गमंततः ।

इति रूपसाधारितः ॥१३॥

रत्नाकरे—

षाड्जीधैवतिकोत्पन्नो ग्रहांशन्यासषड्जकः ॥ ७०१ ॥

काकल्यन्तरसंयुक्तः पूर्णः षड्जादिमूर्छनः ।
प्रसन्नमध्येनारोहिवर्णे वीरादिके रसे ॥ ७०२ ॥

वीरहास्ये निर्वहणे गेयो रुद्रप्रियः शकः ।

हरिपालीये—

जातः षड्ज्याश्च धैवत्याः शकसंज्ञो निरूप्यते ॥ ७०३ ॥

(षड्जन्यासांशसंयुक्तः)[1] पञ्चमाल्पो भवेदयम् ।
युक्तारोही प्रसन्नान्तो मध्यमाश्रितमूर्छनः ॥ ७०४ ॥

शकसंज्ञ इति प्रोक्तो नारदेन महात्मना ।

इति शकः ॥१४॥

रत्नाकरे—

शुद्धमध्यमया सृष्टो रागो भम्माणपञ्चमः ॥ ७०५ ॥

ग्रहांशन्यासषड्जश्च मन्यासः काकलीयुतः ।
गाल्पः पूर्णः सषड्जादिमूर्छनारोहिवर्णकः ॥ ७०६ ॥

प्रसन्नमध्यालङ्कारो वीरे रौद्रे ऽद्भुते रसे ।
पथि भ्रष्टे[2] वनभ्रान्ते विनियुक्तः शिवप्रियः ॥ ७०७ ॥

हरिपालीये—

षाड्जीधैवतिकोद्भूतो भवेद्भम्माणपञ्चमः ।
[षड्जग्रहांशकन्यासः पूर्णः काकलिनायुतः ॥ ७०८ ॥

षड्जादिमूर्छनायुक्तः आरोहीवर्णको भवेत् ।
प्रसन्नमध्यालङ्कारो भवेद् भम्माणपञ्चमः][3] ॥ ७०९ ॥

इति भम्माणपञ्चमः ॥१५॥

---

1 अयमंशः मातृकायां पतितः ।

2 'पथि भ्रष्टः 'इति रत्नाकरमूलग्रन्थस्थपाठः चिन्त्यः ।

3 अयं सार्धश्लोकः मातृकायां नोद्धृतः ।

रत्नाकरे—

मध्यमापञ्चमीजातो नर्तोऽशग्रहपञ्चमः ।
मन्यासः काकलीयुक्तः पञ्चमादिकमूर्छनः ॥ ७१० ॥

गाल्पः प्रसन्नमध्येन भूष्यः सञ्चारिवर्णवान् ।
धीररुद्रटचारीकमण्डलादौ[1] प्रयुज्यते ॥ ७११ ॥

हास्यशृङ्गारयोरेष रसयोः काश्यपोदितः ।
धैवतीमपि तद्धेतुं दुर्गाशक्तिरभाषत ॥ ७१२ ॥

हरिपालीये—

मध्यमापञ्चमीजातो नर्ताख्यः कीर्त्यते ऽधुना ।
पञ्चमांशग्रहो न्यासे मध्यमः काकलीयुतः ॥ ७१३ ॥

मूर्छना पञ्चमाद्येषु स्वरेष्वत्र विधीयते ।
प्रसन्नमध्यसंयुक्तस्तथा गान्धारपञ्चमौ[2] ॥ ७१४ ॥

सञ्चारिवर्ण इत्येष नर्ताख्योऽयं निरूपितः ।

इति नर्तः ॥१६॥

रत्नाकरे—

षड्जर्षभांशग्रहः स्यात्कैशिकीजातिसम्भवः ॥ ७१५ ॥

---

1 ‘ मण्डलाजा ’विति रत्नाकरमूलग्रन्थपाठः ।

2 ‘ तथा गाल्पकसंयुतः ’इति पाठः समीचीन इति भाति ।

ऋषभाल्पो निगन्यासो मन्द्रगान्धारषड्जकः ।
प्रसन्नाद्यवरोहिभ्यां युक्तः षड्जादिमूर्छनः ॥ ७१६ ॥

वीररौद्राद्भुतरसः शाम्भवः षड्जकैशिकः ।

हरिपालीये—

कैशिकीजातिसम्भूतः षड्जकैशिक उच्यते ॥ ७१७ ॥

षड्जर्षभग्रहांशोऽयमृषभोऽल्पो भवेदयम् ।
न्यासौ निषादगान्धारौ मन्द्रौ गान्धारषड्जकौ ॥ ७१८ ॥

प्रसन्नादिरलङ्कारो वर्णस्स्यादवरोहितः ।
षड्जादिमूर्छनश्चैवं कथितः षड्जकैशिकः ॥ ७१९ ॥

इति षड्जकैशिकः ॥१७॥

रत्नाकरे—

लक्ष्माधुना प्रसिद्धानां सहेतूनां ब्रुवेऽधुना ।
गान्धारीमध्यमापञ्चम्युद्भवः काकलीयुतः ॥ ७२० ॥

मन्यासो मन्द्रषड्जांशग्रहः सौवीरमूर्छनः ।
प्रसन्नाद्यवरोहिभ्यां मुखसन्धौ नियुज्यते ॥ ७२१ ॥

मध्यमग्रामरागोऽयं हास्यशृङ्गारकारकः ।
ग्रीष्मेऽह्नः प्रथमे यामे ध्रुवप्रीत्यै नियुज्यते ॥ ७२२ ॥

हरिपालीये—

गान्धारपञ्चमीजातो मध्यमग्रामनामकः ।
लक्ष्यते काकलीनाम्ना स्वरेण परिशोभितः ॥ ७२३ ॥

मध्यमन्याससंयुक्तो षड्जमन्द्रग्रहांशकः ।
सम्मूर्छितो मध्यमे स्यादवरोह्यत्र वर्णकः ॥ ७२४ ॥

प्रसन्नान्तो ह्यलङ्कारो मध्यमग्राम इत्यसौ ।

इति मध्यमग्रामः ॥१८॥

**रत्नाकरे—**

तदुद्भवो मध्यमादिर्मग्रहांशः प्रकीर्तितः[1] ॥ ७२५ ॥

**हरिपालीये—**

तत्रादौ मध्यमादिस्स्यान्मध्यमग्रामसम्भवः ।
मध्यमांशग्रहन्यासो गीयते प्रथमं बुधैः ॥ ७२६ ॥

इति मध्यमादिः ॥१९॥

**रत्नाकरे—**

कैशिकीजातिजो षड्जग्रहांशान्तो ऽल्पधैवतः
सकाकलीकः षड्जादिमूर्छनारोहिवर्णवान् ॥ ७२७ ॥

प्रसन्नमध्यालङ्कारो वीरे रौद्रे ऽद्भुते रसे ।
विप्रलम्भे प्रयोक्तव्यः शिशिरे प्रहरे ऽन्तिमे ॥ ७२८ ॥

दिनस्य केशवप्रीत्यै

**हरिपालीये—**

कैशिकीजातिसम्भूतो भवेन्मालवकैशिकः ॥ ७२९ ॥

---

[1] रत्नाकरमूलग्रन्थे 'तदुद्भवा मध्यमादिर्मग्रहांश—' इति लिङ्गभेदो दृश्यते ॥

षड्जग्रहांशतारेषु धैवताल्पः[1] सकाकली ।
षड्जादिमूर्छनो वर्णस्तथारोही भवेदिह ॥ ७३० ॥

प्रसन्नमध्यालङ्कार इति मालवकैशिकः ।

इति मालवकैशिकः ॥२०॥

रत्नाकरे—

मालवश्रीस्तदुद्भवा ॥ ७३१ ॥

समस्वरा तारमन्द्रषड्जांशन्यासषड्जभाक् ।

हरिपालीये—

उदीर्यते मालवश्रीर्जातो मालवकैशिकात् ॥ ७३२ ॥

समस्वरस्तु सम्पूर्णः षड्जे स्यात्तारमन्द्रवान् ।
षड्जांशन्याससहितो रागो ऽयं परिकीर्तितः ॥ ७३३ ॥

इति मालवश्रीः ॥२१॥

रत्नाकरे—

विकारिमध्यमोद्भूतः षाडवो गपदुर्बलः ।
न्यासांशमध्यमस्तारमध्यमग्रहसंयुतः ॥ ७३४ ॥

काकल्यन्तरयुक्तश्च मध्यमादिकमूर्छनः ।
अवरोह्यादिवर्णेन प्रसन्नान्तेन भूषितः ॥ ७३५ ॥

---

[1] 'धैवतान्तः' इति भरतकोशपाठः ।

पूर्वरङ्गे प्रयोक्तव्यो हास्यशृङ्गारदीपकः ।
शुक्रप्रियः पूर्वयामे || ७३६ ||

हरिपालीये—

मध्यमाजातिसम्भूतः षाडवः षाडवो भवेत् ।
गान्धारपञ्चमाल्पोऽयं न्यासेंऽशे मध्यमाश्रितः || ७३७ ||

काकल्यन्तरसंयुक्तो भवेत्तारग्रहे पुनः ।
मूर्छना मध्यमादिस्स्यात् प्रसन्नान्तो भवेदिह || ७३८ ||

अलङ्कारो ऽवरोही स्याद्वर्णे इत्येव षाडवः ।

इति शुद्धषाडवः ||२२||

रत्नाकरे—

तोडिका स्यात्तदुद्भवा || ७३९ ||

मध्यमांशग्रहन्यासा सतारा कम्पपञ्चमा ।
समेतरस्वरा मन्द्रगान्धारा हर्षकारिणी || ७४० ||

हरिपालीये—

अथ तोण्डी षाडवाङ्गः न्यासांशग्रहमध्यमः ।
सम्पूर्णः षड्जतारश्च पञ्चमे[1] मन्द्ररूपिणि || ७४१ ||

इति तोण्डी ||२३||

रत्नाकरे—

षाडवादेव बङ्गालो ग्रहांशन्यासमध्यमः ।
प्रहर्षे विनियोक्तव्यः प्रोक्तः सोढलसूनुना || ७४२ ||

---

[1] 'मध्यमे' इति भरतकोशपाठः ।

हरिपालीये—

रागोऽथ शुद्धबङ्गालो (देशीहि)[1]न्दोलसम्भवः ।
न्यासांशमध्यमः सोऽयं रागज्ञैः परिकीर्तितः || ७४३ ||

इति शुद्धबङ्गालः ॥२४॥

रत्नाकरे—

षड्जोदीच्यवतीजातो भिन्नषड्जो रिपोज्झितः ।
धांशग्रहो मध्यमान्त उत्तरायतया युतः || ७४४ ||

सञ्चारिवर्णरुचिरः प्रसन्नान्तविभूषितः ।
काकल्यन्तरसंयुक्तः चतुराननदैवतः || ७४५ ||

हेमन्ते प्रथमे यामे बीभत्से सभयानके ।
सार्वभौमोत्सवे गेयः || ७४६ ||

हरिपालीये नोक्तः ॥[2]

इति भिन्नषड्जः ॥२५॥

रत्नाकरे—

भैरवस्तत्समुद्भवः
धांशो मान्त्यो रिपत्यक्तः प्रार्थनायां समस्वरः || ७४७ ||

---

[1] अयमंशः मातृकायां पतितः ।

[2] किन्तु हरिपालीयमूलमातृकायामिदं श्लोकद्वयं वर्तते ।
षड्जोदीच्यवतीजातः पञ्चमर्षभवर्जितः ।
धैवतांशग्रहोपेतो मध्यमान्तमनोहरः ॥
सञ्चारिवर्णसंयुक्तः प्रसन्नान्तविभूषितः ।
काकल्यन्तरसंयुक्तो भिन्नषड्ज उदीरितः ॥

हरिपालीये—

अथ स्याद्भैरवो रागः षड्जांशन्यासमध्यमः ।
समस्वरः धैवतांशः पञ्चमर्षभवर्जितः ॥ ७४८ ॥

इति भैरवः ॥ २६ ॥

रत्नाकरे—

मध्यमापञ्चमीजात्योः सञ्जातो भिन्नपञ्चमः ।
धग्रहांशः पञ्चमान्तः पौरवीमूर्छनान्वितः ॥ ७४९ ॥

काकल्या कलितः क्वापि निषादेनाप्यलङ्कृतः ।
प्रसन्नाद्येन सञ्चारिवर्णः शौरिप्रिये रसे ॥ ७५० ॥

भयानके च बीभत्से सूत्रधारप्रवेशने ।
ग्रीष्मे प्राक्प्रहरे गेयः ॥ ७५१ ॥

हरिपालीये—

मध्यमापञ्चमीजातो लक्षितो भिन्नपञ्चमः ।
धैवतः स्याद्ग्रहश्चांशः पञ्चमान्तः परिष्कृतः ॥ ७५२ ॥

पञ्चमो मूर्छनान्ते च काकलीसङ्गशोभितः ।
निषादाल्पत्वसञ्चारिवर्णसङ्गविराजितः ॥ ७५३ ॥

प्रसन्नान्तयुतप्रोक्त इत्येवं भिन्नपञ्चमः ।

इति भिन्नपञ्चमः ॥ २७ ॥

रत्नाकरे—

वराटी स्यात्तदुद्भवा[1] ॥ ७५४ ॥

---

[1] मातृकायां पतितः ।

धांशा षड्जग्रहन्यासा ममन्द्रा तारधैवता ।
समेतरस्वरा गेया शृङ्गारे शार्ङ्गिसम्मता ॥ ७५५ ॥

हरिपालीये—

अतः परं वराटीति प्रथितो राग उच्यते ।
रागाज्जातास्ततो रागा रागपञ्चमसंज्ञकात् ॥ ७५६ ॥

धैवतांशो ग्रहन्यासषड्जोऽसौ तारधैवतः ।
मध्यमन्द्रस्तु सम्पूर्णः समशेषस्वरो भवेत् ॥ ७५७ ॥

इति वराटी ॥ २८ ॥

रत्नाकरे—

मध्यमग्रामसम्बन्धो धैवत्यार्षभिकोद्भवः ।
नि(?रि)न्यासांशग्रहः क्वापि मान्तः पञ्चमषाडवः ॥ ७५८ ॥

विलसत्काकलिकोऽपि कलोपनतयान्वितः ।
प्रसन्नाद्यकलितारोहिवर्णः शिवप्रियः ॥ ७५९ ॥

वीररौद्राद्भुतरसो नारीहास्ये नियुज्यते ।

हरिपालीये—

मध्यमग्रामसम्बद्धो भवेत्पञ्चमषाडवः ॥ ७६० ॥

आर्षमीधैवतीजातो ऋषभो न्यासकांशयोः ।
ग्रहे क्वचिन्मध्यमान्तस्तथा पञ्चमषाडवः ॥ ७६१ ॥

सकाकली प्रसन्नादिरारोहीवर्णसंश्रयः ।
योजितो लक्षणैरेवं भवेत्पञ्चमषाडवः ॥ ७६२ ॥

इति पंचमषाडवः ॥ २९ ॥

रत्नाकरे—

तज्जाता घूर्जरी मान्ता रिग्रहांशा ममध्यभाक् ।
रितारा रिधभूयिष्ठा शृङ्गारे ताडिता मता ॥ ७६३ ॥

हरिपालीये—

कथ्यते घूर्जरीरागो जातः पञ्चमषाडवात् ।
ऋषभांशग्रहैर्युक्तः न्यासवान्मध्यमस्वरे ॥ ७६४ ॥

षड्जमध्यर्षभे तारो बहुत्वं धैवतर्षभे ।
सम्प्राप्ते घूर्जरीराग इति सम्यङ्निरूपितः ॥ ७६५ ॥

इति घूर्जरी ॥ ३० ॥

रत्नाकरे—

षड्जमध्यमया सृष्टो धैवत्या चाल्पपञ्चमः ।
टक्कः सांशग्रहन्यासः काकल्यन्तरराजितः ॥ ७६६ ॥

प्रसन्नान्तान्वितश्चारुसञ्चारी चाद्यमूर्छनः ।
मुदे रुद्रस्य वर्षासु प्रहरेऽह्नश्च पश्चिमे ॥ ७६७ ॥

वीरे रौद्रादद्भुतरसे युद्धवीरे नियुज्यते ।

हरिपालीये—

षड्जग्रामसमुद्भूतष्टक्करागो निरूप्यते ॥ ७६८ ॥

षड्जो ग्रहेंऽशे न्यासे च निषादः पञ्चमो मतः[1] ।
अल्पौ निषादगान्धारौ काकल्यन्तरसंयुतौ ॥ ७६९ ॥

सम्पूर्णश्च भवेदेतट्टक्करागस्य लक्षणम् ।

इति टक्कः ॥ ३१ ॥

रत्नाकरे—

गौडस्तदङ्गं निन्यासग्रहांशः पञ्चमोज्झितः ॥ ७७० ॥

हरिपालीये—

ततो गौडाभिधो रागष्टक्करागसमुद्भवः ।
न्यासांशग्रहवानेष निषादे पञ्चमोज्झितः ॥ ७७१ ॥

इति गौडः ॥ ३२ ॥

रत्नाकरे—

टक्काङ्गं टक्कवत्तारैः स्वरैः कोलाहलो ऽखिलैः ।

हरिपालीये नोक्तः ॥

इति कोलाहलः ॥ ३३ ॥

रत्नाकरे—

धैवत्यार्षभिकावर्ज्यस्वरनामकजातिजः ॥ ७७२ ॥

---

1 ग्रहांशन्यासभिन्नस्थलाभिप्रायेणेयमुक्तिरिति सङ्गच्छते किं ? अस्यार्थो नान्वेति । पाठान्तरालाभात् एवमेव दर्शितः ।

हिन्दोलको रिधत्यक्तः षड्जन्यासग्रहांशकः ।
अरोहिणि प्रसन्नाद्ये शुद्धमध्याख्यमूर्छनः ॥ ७७३ ॥

काकलीकलितो गेयो वीरे रौद्रे ऽद्भुते रसे ।
वसन्ते प्रहरे तुर्ये मकरध्वजवल्लभः ॥ ७७४ ॥

सम्भोगे विनियोक्तव्यः

हरिपालीये—

मार्गहिन्दोलजातो ऽथ हिन्दोलस्तारमध्यमः ॥ ७७५ ॥

षड्जन्यासग्रहांशश्च मन्द्रषड्जस्वरो भवेत् ।
धैवतर्षभसन्त्यक्तः षड्जमध्यमकम्पितः[1] ॥ ७७६ ॥

इति हिन्दोलः ॥३४॥

रत्नाकरे—

वसन्तस्तत्समुद्भवः

पूर्णस्तल्लक्षणो देशीहिन्दोलो ऽप्येष कथ्यते ॥ ७७७ ॥

1 किन्तु भरतकोशे हरिपालीयोद्धृतमिति पाठान्तरमिदं दृश्यते :—
स्वरनामसु प्रसिद्धासु सप्तजातिषु धैवतीम् ।
आर्षभीञ्च परित्यज्य हिन्दोलो नाम जायते ॥
धैवतर्षभसन्त्यक्तः षड्जन्यासग्रहांशकः ।
आद्यालङ्कारवर्णोऽसौ शुद्धमध्यममूर्छनः ॥
काकलीसङ्गसुभगो हिन्दोलो लक्षितस्ततः ।
मार्गहिन्दोलजातोऽथ हिन्दोलस्तारमध्यमः ॥
षड्जन्यासग्रहांशश्च षड्जपञ्चमकम्पितः ।
अयमेव वसन्तस्स्याद्देशीहिन्दोल एव च ॥

हरिपालीये—

अयमेव वसन्तस्स्याद्देशीहिन्दोल एव च ।

इति वसन्तः ॥३५॥

रत्नाकरे—

षड्जमध्यमया सृष्टः कैशिक्या च रिपोज्झितः ॥ ७७८ ॥

तारसांशग्रहो मान्तः शुद्धकैशिकमध्यमः ।
प्रसन्नान्तावरोहिभ्यामाद्यमूर्छनया युतः ॥ ७७९ ॥

गान्धाराल्पः काकलीयुग्वीरे रौद्रेऽद्भुते रसे ।
रुद्र[1] प्रियः पूर्वयामे सन्धौ निर्वहणे भवेत् ॥ ७८० ॥

हरिपालीये—

कैशिकीषड्जमध्याभ्यां सृष्टः कैशिकमध्यमः ।
षड्जांशो मध्यमन्यासो मुक्तत्रिश्रुतिपञ्चमः ॥ ७८१ ॥

षड्जस्तारग्रहांशेषु न्यासे भूयोऽपि मध्यमः ।
अल्पो निषादे गान्धारे पञ्चमर्षभवर्जितः ॥ ७८२ ॥

निषादे काकलीयुक्तः षाडवस्तदनन्तरम् ।
अलङ्कारः प्रसन्नान्त इति कैशिकमध्यमः ॥ ७८३ ॥

इति (शुद्ध)कैशिकमध्यमः ॥३६॥

---

1 'चन्द्र' इति रत्नाकरमूलग्रन्थपाठः ।

रत्नाकरे—

तज्जा धन्नासिका षड्जांशग्रहन्यासमध्यमा ।
रिवर्जिता गपाल्पा च वीरे धीरैः प्रयुज्यते ॥ ७८४ ॥

हरिपालीये—

अतः परं तु धन्यासी शुद्धकैशिकमध्यमात् ।
षड्जांशग्रहनिष्पत्तौ (? संयुक्ता) षाडवा न्यासमध्यमा ॥ ७८५ ॥

ऋषभेण परित्यक्ता स्वल्पगान्धारपञ्चमा ।

इति धन्यासी ॥३७॥

रत्नाकरे—

षड्जग्रामे रेवगुप्तो मध्यमार्षभिकोद्भवः ॥ ७८६ ॥

रिग्रहांशो मध्यमान्तः प्रसन्नाद्यन्तभूषितः ।
बुधैरुद्घट्टचारीकमण्डलाजौ नियुज्यते ॥ ७८७ ॥

वीररौद्राद्भुतरसः पार्वतीपतिवल्लभः ।

हरिपालीये[1]—

आर्षभीमध्यमोत्पन्नः रेवगुप्तोऽथ लक्ष्यते ॥ ७८८ ॥

---

[1] मातृकायां पतितः ।

षड्जग्रहांशकश्चैव[1] मध्यमान्तविराजितः ।
सप्रसन्नाद्यलङ्कारे रेवगुप्त इतीरितः ॥ ७८९ ॥

इति रेवगुप्तः ॥३८॥

रत्नाकरे—

तज्जा देशी रिग्रहांशन्यासा पञ्चमवर्जिता ।
गान्धारमन्द्रा करुणे गेया मनिप [2]भूयसी ॥ ७९० ॥

हरिपालीये—

रेवगुप्तसमुद्भूतो देशीरागोऽथ कीर्त्यते ।
गान्धारे मन्द्रतां यातः पञ्चमेन विवर्जितः ॥ ७९१ ॥

षड्जमध्यनिषादेषु बहुत्वं समुपागतः ।
ऋषभांशग्रहन्यासो देशीरागस्समीरितः ॥ ७९२ ॥

इति देशी ॥३९॥

रत्नाकरे—

गान्धारीरक्तगान्धारीजन्यो गान्धारपञ्चमः ।
गान्धारांशग्रहन्यासो हरिणाश्वाख्यमूर्छनः ॥ ७९३ ॥

प्रसन्नमध्यालङ्कारो सञ्चारिणि सकाकली ।
राहुप्रियोऽद्भुते हास्ये विस्मये करुणे भवेत् ॥ ७९४ ॥

---

1 'षड्जग्रामांशकश्चैष' इति भरतकोशपाठः ।

2 'मनिस' इति रत्नाकरमूलग्रन्थपाठः ।

हरिपालीये नोक्तः[1] ॥

इति गान्धारपञ्चमः ॥४०॥

रत्नाकरे—

तज्जा स्फुरितगान्धारा देशाख्या वर्जितर्षभा ।
ग्रहांशन्यासगान्धारा निमन्द्रा च समस्वरा ॥ ७९५ ॥

हरिपालीये—

अनन्तरं तु देशाख्या जाता गान्धारपञ्चमात् ।
ऋषभेण परित्यक्ता समस्वरविभूषिता ॥ ७९६ ॥

ग्रहांशन्यासगान्धारा स्फुरिता षाडवोदिता[2] ।

इति देशाख्या ॥४१॥

रत्नाकरे—

त्रवणा भिन्नषड्जस्य भाषा धनिसभूयसी ॥ ७९७ ॥

धनिसैर्वेलिता धांशग्रहन्यासा रिपोज्झिता ।
सम[3]द्विगुणिता मन्द्रधैवता विजये मता ॥ ७९८ ॥

---

1 किन्तु हरिपालीयमूलग्रन्थे अस्य रागस्य लक्षणमुक्तं । यथा—
"पञ्चमोऽशोऽत्र गान्धारो न्यासः स्यादृषभोऽपि वा ।
गान्धारी पञ्चमीकः स्याद्विदार्यादिकमत्र च ।
पूर्णस्वरा सदा चेयं प्रोक्ता गान्धारपञ्चमी ॥" इति।

2 'संपूर्णा वंशवादने' इति हरिपालीयमूलग्रन्थपाठः ।
अपिच, 'निषादमन्द्रगान्धारस्वरिता षाडवा पुनः' इति श्लोकार्धः तत्राधिक्येन दृश्यते ।

3 'गम' इति रत्नाकरमूलग्रन्थपाठः ।

हरिपालीये—

कथ्यते त्रवणा नाम्ना भिन्नषड्जसमुद्भवा ।
धैवतांशयुता सैवं वर्जितर्षभपञ्चमा ॥ ७९९ ॥

अयन्तु मेघनादस्स्याद्ग्रन्थेऽस्मिन्वै समीरितः ।[1]

इति त्रवणा ॥४२॥

रत्नाकरे—

तज्जा डोंबकृतिः सांशा धान्ता दैन्ये रिपोज्झिता ॥ ८०० ॥

हरिपालीये—

अतः परं भिन्नषड्जसमुद्भूता त्रावणीप्रिया ।
तदङ्गं स्यात् डोम्बकृतिः धैवतन्याससंयुता ॥ ८०१ ॥

षड्जांशा पञ्चमेनापि ऋषभेण विवर्जिता ।
एवं डोम्बकृतिं प्राह विचारचतुराननः[2] ॥ ८०२ ॥

इति डोम्बकृतिः ॥४३॥

रत्नाकरे—

मध्यमापञ्चमीधैवत्युद्भवः ककुभो भवेत् ।
धांशग्रहः पञ्चमान्तो धैवतादिकमूर्छनः ॥ ८०३ ॥

---

1 अयं श्लोकार्धः भरतकोशे त्रावणीरागलक्षणकथनावसरे हरिपालीयोद्-धृतमिति आधिक्येन दृश्यते ॥

2 मातृकायां पतितः ।

प्रसन्नमध्यारोहिभ्यां करुणे यमदैवतः ।
गेयः शरदि ॥ ८०४ ॥

हरिपालीये—

षड्जग्रामसमुद्भूतः ककुभः कीर्त्यते ऽधुना ।
धैवतांशग्रहो न्यासे पञ्चमः पूरितस्स्वरैः ॥ ८०५ ॥

प्रसन्नमध्यालङ्कारो सारोही ककुभो भवेत् ।

इति ककुभः ॥४४॥

रत्नाकरे—

तज्जाता भवेद्भाषा (तरङ्गिका ?) रगन्तिका ॥ ८०६ ॥

धन्यासांशग्रहा भूरिधैवतैः स्फुरितैर्युता[1] ।
अतारमध्यमा पापन्यासा श्रीशार्ङ्गिणोदिता ॥ ८०७ ॥

हरिपालीये—

अनन्तरन्तु रगन्ती ककुभाङ्ग समस्वरा ।
पूर्णा चांशग्रहन्यासधैवता मन्द्रमध्यमा ॥ ८०८ ॥

गान्धारतारर्षभा च रगन्ती कथिता बुधैः ।

इति रगन्ती ॥४५॥

रत्नाकरे—

तद्भवा साबरी सान्ता[2] गतारा मन्द्रमध्यमा ॥ ८०९ ॥

---

1 मातृकायां पतितः ।

2 'धान्ते'ति रत्नाकरमूलग्रन्थपाठः ।

मग्रहांशा स्वल्पषड्जा करुणे पञ्चमोज्झिता ।

हरिपालीये—

ततः ककुभसंभूता रगन्तीति समीरिता ॥ ८१० ॥

सावरी तु तदङ्गं स्यात् षड्जान्ता धैवतांशका ।
मध्यमांशग्रहा तारगान्धारे स्वल्पषड्जका ॥ ८११ ॥

पञ्चमेन परित्यक्ता मध्यमे मन्द्ररूपिणी ।
लक्षणैरिति निर्दिष्टा सावरीत्यभिधीयते ॥ ८१२ ॥

इति सावरी ॥४६॥

रत्नाकरे—

विभाषा ककुभे भोगवर्धिनी तारमन्द्रगा ।
धैवतांशग्रहन्यासा गापन्यासा रिवर्जिता ॥ ८१३ ॥

धनिभ्यां गमपैर्भूरिवैराग्ये विनियुज्यते ।

हरिपालीये नोक्तः ॥

इति भोगवर्धिनी ॥४७॥

रत्नाकरे—

तज्जा वेलावुली तारधा गमन्द्रा समस्वरा ॥ ८१४ ॥

धाद्यंशान्ता कम्पषड्जा विप्रलम्भे हरिप्रिया ।

हरिपालीये—

अथ भोगावती नाम्ना ककुभप्रभवोच्यते ॥ ८१५ ॥

वेलावुली तदङ्गं स्यात्सम्पूर्णा च समस्वरा ।
धैवतांशग्रहन्यासा तारधैवतसंयुता ॥ ८१६ ॥

मध्यमे मन्द्रतां प्राप्ता तथा षड्जे प्रकम्पिता ।
इदं वेलावुलीलक्ष्म निर्णीतं दत्तिलादिभिः ॥ ८१७ ॥

इति वेलावुली ॥४८॥

रत्नाकरे—

पञ्चमांशग्रहन्यासा धरितारा गमोत्कटा ।
गमन्द्रा चोत्पवे गेया तज्ज्ञैः प्रथममञ्जरी ॥ ८१८ ॥

हरिपालीये—

अनन्तरं पञ्चमाङ्गं नाम्ना प्रथममञ्जरी ।
गान्धारमन्द्रा तारा च धैवतर्षभयोस्तथा ॥ ८१९ ॥

गान्धारमध्यमाढ्या च ग्रहांशन्यासपञ्चमा ।
शेषेष्वल्पत्वसंयुक्ता गीतज्ञैरभिधीयते ॥ ८२० ॥

इति प्रथममञ्जरी ॥४९॥

रत्नाकरे—

धन्यासांशग्रहा भाषा बङ्गाली भिन्नषड्जजा ।
गापन्यासा दीर्घरिमा धमन्द्रोद्दीपने भवेत् ॥ ८२१ ॥

हरिपालीये नोक्ता ॥

इति बङ्गाली ॥५०॥

रत्नाकरे—

आदि[1]कामोदिका तज्जा ग्रहांशन्यासधैवता ।
समन्द्रा तारगान्धारा गुर्वाज्ञायां समस्वरा ॥ ८२२ ॥

हरिपालीये—

अनन्तरं या बङ्गाली भिन्नषड्जसमुद्भवा ।
तदङ्गमादिकामोदा ग्रहांशन्यासधैवता ॥ ८२३ ॥

समस्वरा च सम्पूर्णा कथितोऽयं मनीषिभिः ।

इति आदिकामोदा ॥५१॥

रत्नाकरे—

टक्कभाषा वेगरञ्जी निमन्द्रा धपवर्जिता ॥ ८२४ ॥

सांशग्रहान्ता माने स्यान्निषड्जरिगमैर्बहुः ।

हरिपालीये—

अनन्तरं भवेद्वेगरञ्जिका तारमध्यमा ॥ ८२५ ॥

षड्जांशग्रहन्यासा च हीनधैवतपञ्चमा ।
पूर्णा बहुत्वसंयुक्ता निषादर्षभयोस्तथा ॥ ८२६ ॥

---

1. 'आडी' इति रत्नाकरमूलग्रन्थपाठः ।

अङ्गत्वं टक्करागस्य भाषा चोक्ता मनीषिभिः ।

इति वेगरञ्जी ॥५२॥

रत्नाकरे—

नागध्वनिं तदुद्भूतं षड्जन्यासग्रहांशकम् ॥ ८२७ ॥

धपत्यक्तं रसे वीरे शार्ङ्गदेवः समादिशत् ।

हरिपालीये—

अनन्तरं टक्करागसम्भवा वेगरञ्जिका ॥ ८२८ ॥

तदङ्गभूतो रागस्स्यात् नागध्वनिसमाह्वयः ।
षड्जन्यासांशसहितो हीनधैवतपञ्चमः ॥ ८२९ ॥

नागध्वनिरिति प्रोक्तो नारदेन महात्मना ।

इति नागध्वनिः ॥५३॥

रत्नाकरे—

षड्जमध्यमया सृष्टः सौवीरः काकलीयुतः ॥ ८३० ॥

गाल्पः षड्जग्रहन्यासांशकः षड्जादिमूर्छनः ।
प्रसन्नाद्यवरोहिभ्यां संयतानां तपस्विनाम् ॥ ८३१ ॥

गृहिणाञ्च प्रवेशादौ रसे शान्ते शिवप्रियः ।
प्रयोज्यः पश्चिमे यामे वीरे रौद्रे ऽद्भुते रसे ॥ ८३२ ॥

हरिपालीये—

षड्जमध्यमया जात्या सृष्टः सौवीर उच्यते ।
षड्जग्रहांशः स्वल्पत्वं स्याद्गान्धारनिषादयोः ॥ ८३३ ॥
निषादे काकलीयुक्तः पूर्णः सौवीर उच्यते ।

इति सौवीरः ॥९४॥

रत्नाकरे—

सौवीरी तद्भवा मूलभाषा बहुलमध्यमा ॥ ८३४ ॥
षड्जाद्यन्तात्र संवादः सधयो रिधयोरपि ।

हरिपालीये नोक्ता ॥
इति सौवीरी ॥९५॥

रत्नाकरे—

तज्जा वराटिका सैव बटुकी धनिपाधिका ॥ ८३५ ॥
सन्यासांशग्रहा तारसधा शान्ते नियुज्यते ।

हरिपालीये—

अङ्गं सौवीररागस्य सौवीरीत्यभिविश्रुता ॥ ८३६ ॥
प्रासाङ्गत्वे ततस्तस्यां नाम्ना शुद्धवराटिका ।
न्यासांशषड्जा सम्पूर्णा धैवते पञ्चमे तथा ॥ ७३७ ॥

निषादे बहुतां प्राप्ता प्रोक्ता शुद्धवराटिका ।

इति शुद्धवराटिका ॥५६॥

रत्नाकरे—

हिन्दोले पिञ्जरी भाषा गांशा सान्ता निवर्जिता ॥ ८३८ ॥

हरिपालीये नोक्ता ॥

इति पिञ्जरी ॥५७॥

रत्नाकरे—

तज्जा समस्वरा नट्टा तारगान्धारपञ्चमा ।
सन्यांसांशग्रहा मन्द्रनिषादा तारधैवता ॥ ८३९ ॥

हरिपालीये—

अथ नट्टा तु सम्पूर्णा षड्जन्य'सग्रहांशका ।
तारमन्द्रौ तु गान्धारे पञ्चमे तु समस्वरा ॥ ८४० ॥

इति नट्टा ॥५८॥

रत्नाकरे—

अङ्गं कर्णाटबङ्गालं वेगरञ्ज्याः पवर्जितम् ।
गांशं सान्तं च शृङ्गारे वक्ति श्रीकरणेश्वरः ॥ ८४१ ॥

हरिपालीये—

अथ कर्णाटबङ्गालो गान्धारांशो ऽन्तषड्जकः ।
पञ्चमेन परित्यक्तो रागोऽयं कथितो बुधैः ॥ ८४२ ॥

इति कर्णाटबङ्गालः ॥५९॥

इति रत्नाकरहरिपालीयोक्तानि भाषाङ्गानि ॥

हरिपालीये—

कोलाहलेति या भाषा टक्करागसमुद्भवा ।
अङ्गं तस्या रामकृतिः षड्जन्यासांशमध्यमा ॥ ८४३ ॥

पञ्चमस्वरहीनेति प्रोक्ता रामकृतिर्भवेत् ।

रत्नाकरे—

आपञ्चमं तारमन्द्रा षड्जन्यासांशग्रहा ॥ ८४४ ॥

रिषड्जाभ्यधिका धीरैरेषा रामकृतिर्मता ।

इति रामकृतिः ॥६०॥

रत्नाकरे—

षड्जांशग्रहणन्यासां गतारां[1] मपभूयसीम् ॥ ८४५ ॥

रिधत्यक्तां समन्द्राञ्च[2] तज्ज्ञाः गौडकृतिर्जगुः ।

हरिपालीये नोक्ता ॥

इति गौडकृतिः ॥६१॥

रत्नाकरे—

निमन्द्रा मध्यमन्यासा रिपत्यक्ता समस्वरा ॥ ८४६ ॥

---

1 'मतारा'मिति रत्नाकरमूलग्रन्थपाठः ।

2 'पमन्द्रा'मिति रत्नाकरमूलग्रन्थपाठः ।

सन्यासांशा धग्रहा च वीरे देवकृतिर्भवेत् ।

हरिपालीये—

अथ देवकृतिः षड्जन्यासा मन्द्रसमन्विता ॥ ८४७ ॥

मध्यव्यापा तथा षड्जन्यासांशा धैवतग्रहा ।
निषादमन्द्रा रागज्ञैः कथितो ऽयं समस्वरा ॥ ८४८ ॥

इति देवकृतिः ॥६२॥

इति क्रियाङ्गानि ॥

रत्नाकरे—

स्युर्वराट्या उपाङ्गानि सन्यासांशग्रहाणि षट् ।
समन्द्रा कौन्तली तत्र निभूरिः कम्पधैवता[1] ॥ ८४९ ॥

हरिपालीये—

अथ कुन्तलपूर्वा या सा वराटीति कथ्यते ।
निषादबहुला पूर्णा षड्जमन्द्रा तथोदिता ॥ ८५० ॥

इति कुन्तलवराटी ॥६३॥

रत्नाकरे—

वराटी द्राविडी भूरिरिमन्द्रा[2] स्फुरितर्षभा ।

हरिपालीये—

या द्राविडवराटीस्यात्संज्ञया स्फुरितर्षभा ॥ ८५१ ॥

---

1 'कम्प्रधा रता 'विति रत्नाकरमूलग्रन्थपाठः ।

2 'निमन्द्रे 'ति रत्नाकरमूलग्रन्थपाठः ।

निषादमन्द्रा षड्जांशन्यासा सा समुपागता ।

इति द्राविडवराटी ॥६४॥

रत्नाकरे—

वराटी सैन्धवी भूरिगान्धारा सधकम्पिता ॥ ८५२ ॥

शार्ङ्गदेवेन गदिता शृङ्गारे मन्द्रमध्यमा ।

हरिपालीये—

तत्र सैन्धवपूर्वाऽसौ वराटीति निगद्यते ॥ ८५३ ॥

अंशन्यासी भवेत्षड्जाज्जाता मालवकैशिकात् ।
षड्जमन्द्रा कम्पिता च षड्जधैवतयोस्तथा ॥ ७५४ ॥

गान्धारस्वरभूयिष्ठा रागविद्भिरुदीरिता ।

इति सैन्धववराटी ॥६५॥

रत्नाकरे—

मण्डिता मनिधैर्मन्द्रैरवस्थानवराटिका ॥ ८५५ ॥

हरिपालीये—

अनन्तरमवस्थानवराटी सम्भवा ऽपरा ।
धैवते मन्द्ररूपा च तथा मन्द्र[1]निषादयोः ॥ ८५६ ॥

---

1 'मध्य' इति भरतकोशपाठः ।

षड्जन्यासांशसहिता सम्पूर्णा सप्तभिस्स्वरैः ।

इत्यवस्थानवराटी ॥६६॥

रत्नाकरे—

हतस्वरा धमन्द्रा स्यात्कम्पिता[1] हतपञ्चमा ॥ ८५७ ॥

हरिपालीये—

ततो हतस्वराद्या च वराटी नामतो भवेत् ।
षड्जांशन्याससंयुक्ता धैवताख्ये स्वरे पुनः ॥ ८५८ ॥

मन्द्रस्थानमनुप्राप्ता पञ्चमाहतकम्पिता ।

इति हतस्वरवराटी ॥६७॥

रत्नाकरे—

स्यात्प्रतापवराटी च ममन्द्रा[2] कम्पिताद्भुते[3] ॥ ८५९ ॥

हरिपालीये—

ततः प्रतापपूर्वा या वराटी साऽभिधीयते ।
कम्पिता पञ्चमे षड्जे मन्द्ररूपा च धैवते ॥ ८६० ॥

1 'कम्प्रपसे 'ति रत्नाकरमूलग्रन्थपाठः ।

2 'धमन्द्रे 'ति रत्नाकरमूलग्रन्थपाठः ।

3 'कम्प्रसोरुपे 'ति रत्नाकरमूलग्रन्थपाठः ।

पञ्चमस्वरभूयिष्ठा षड्जांशन्यासंसयुता ।

इति प्रतापवराटी ।।६८।।

इति वराट्युपाङ्गानि ।।

रत्नाकरे—

रिपत्यक्ता तु तौण्ड्येव च्छायातौण्डीति कीर्तिता ॥ ८६१ ॥

हरिपालीये—

छायाप्राथमिकातोण्डी ततः परमुदीर्यते ।
पूर्वोक्ततोण्डीरागस्य लक्षणेनसमन्विता ॥ ८६२ ॥

एतावान्भेद एतस्याः पञ्चमर्षभहीनता ।

इति च्छायातोण्डी ।।६९।।

रत्नाकरे—

तोण्ड्येव मांशा[1] वै गाल्पा तौरुष्की निरि[2]भूयसी ॥ ८६३ ॥

हरिपालीये—

कथ्यतेऽथ तुरुष्काद्या तोण्डी मध्यांशसंयुता ।
स्वरैस्सप्तभिरापूर्णा निषादर्षभभूयसी ॥ ८६४ ॥

---

1 'ताडिते 'ति रत्नाकरमूलग्रन्तपाठः ।

2 'निध 'इति रत्नाकरमूलग्रन्थपाठः ।

गान्धारे स्वल्पतां प्राप्ता भवेदियमितीरिता ।

इति तुरुष्कतोण्डी ॥७०॥

इति द्वे तोड्युपाङ्गे ॥

रत्नाकरे—

पञ्चमेनोज्झिता मन्द्रनिषादा ताडितोत्सवे ॥ ८६५ ॥

गीयतामृषभान्तांशा महाराष्ट्री तु घूर्जरी ।

हरिपालीये—

अतः परं महाराष्ट्रपूर्विका गूर्जरी पुनः ॥ ८६६ ॥

न्यासांशभूतरिषभा मन्द्रे ऋषभवर्जिता ।
पञ्चमस्वरसंयुक्ता समाख्याता मनीषिभिः ॥ ८६७ ॥

इति महाराष्ट्रगूर्जरी ॥७१॥

रत्नाकरे—

गूर्जर्येव रिकम्पाढ्या सौराष्ट्री गूर्जरी भवेत् ।

हरिपालीये—

ततस्सौराष्ट्रपूर्वा तु घूर्जरी कम्पितर्षभा ॥ ८६८ ॥

स्वरसप्तकसंपूर्णा कथिता रागवेदिभिः ।

इति सौराष्ट्रगूर्जरी ॥७२॥

रत्नाकरे—

दक्षिणा गूर्जरी कम्पमध्यमा ताडितेतरा ॥ ८६९ ॥

हरिपालीये—

अथ दक्षिणपूर्वाऽसौ घूर्जरी दक्षिणस्वरे[1] ।
कम्पिता ताडिता तद्वत्स्फुरिता पूरितस्वरा ॥ ८७० ॥

इति दक्षिणगूर्जरी ॥७३॥

रत्नाकरे—

रिमन्द्रतारा स्फुरिता हर्पे द्राविडघूर्जरी[2] ।

हरिपालीये—

ततो द्राविडपूर्वेयं घूर्जरी मध्यकम्पिता ॥ ८७१ ॥

पूर्णस्वरा भवेदेषा मन्द्रतारा तथार्षभे ।

इति द्राविडघूर्जरी ॥७४॥

इति घूर्जर्युपाङ्गानि[3] ॥

रत्नाकरे—

मत्यक्तान्दोलितसपा धन्यसांशग्रहान्विता ॥ ८७२ ॥

---

1 'मध्यमस्वरे' इति भरतकोशपाठः ।

2 रागलक्षणमिदं अड्यारपुस्तकभाण्डागारीयरत्नाकरमूलग्रन्थे पतितमपि आनन्दाश्रमीयमूलग्रन्थे दृश्यते ।

3 घूर्जरीशब्दोयं मूलग्रन्थे घुर्जरी, गूर्जरीति च व्यवहृतः ।

विप्रलम्भे भवेद्भुञ्जी[1] त्यत्रोचत्सोढलात्मजः ।

हरिपालीये नोक्ता ॥

इति भुञ्जी ॥७८॥

रत्नाकरे—

मध्यमेन निषादेनान्दोलिता त्यक्तपञ्चमा ॥ ८७३ ॥

कम्भावती[2] तदंशान्ता शृङ्गारे विनियुज्यते ।

हरिपालीये—

कम्भावती लक्ष्यतेऽथ षाडवा ककुभोद्भवा ॥ ८७४ ॥

धैवतांशन्यासवती पञ्चमेन विवर्जिता ।
मध्यमे च निषादे च सेयमान्दोलिता भवेत् ॥ ८७५ ॥

इति कम्भावती ॥७६॥

रत्नाकरे—

छायावेलावुली वेलावुलीवत्कम्पमन्द्रमा ।

हरिपालीये—

ततः परं तु च्छायाद्या भवेद्वेलावुली पुनः ॥ ८७६ ॥

1 'तुच्छी' इति पाठः सिंहभूपालीयव्याख्यानुसारेण साधुः । ग्रन्थकारेण तु 'भुङ्की' इति व्यवहृतः । 'भुञ्जी' इति पाठः समीचीन इति भाति ।

2 'खम्भाइती'ति रत्नाकरमूलग्रन्थपाठः ।

पञ्चमर्षभहीनेयं आहता धैवतेन च ।[1]

इति च्छायावेलावुली ॥७७॥

रत्नाकरे—

सैव प्रतापपूर्वा स्यादाहता रिपवर्जिता ॥ ८७७ ॥

हरिपालीये पतिता ॥[2]

इति प्रतापवेलावुली ॥७८॥

इति चत्वारि वेलावुल्युपाङ्गानि ॥

रत्नाकरे—

धांशन्यासग्रहा तारमन्द्रगान्धारशोभिता ।
भैरवी भैरवोपाङ्गं समशेषस्वरा भवेत् ॥ ८७८ ॥

हरिपालीये—

निरूप्यतेऽथ रागज्ञैर्भैरवी संज्ञितः परः ।
भिन्नषड्जसमुद्भूतो न्यासांशग्रहधैवतः ॥ ८७९ ॥

---

1 'अस्मिन्स्थाने
'पूर्वप्रयुक्तया चासौ वेलावुल्या समा भवेत् ।
एतावन्द्वेदसहिता मन्द्रे मध्यमकल्पिता ।'
इति श्लोकः हरिपालीयमूलग्रन्थे वर्तते।

2 किन्तु हरिपालीयमूलग्रन्थे रागोऽयं लक्षितः । यथा—
'अथ प्रतापोपपदा भवेद्वेलावुली पुनः ।
पञ्चमर्षभहीनेयं आहता धैवतेन च ।'

समशेषस्वरः पूर्णो गान्धारे तारमन्द्रभाक् ।

इति भैरवी ॥७९॥

रत्नाकरे—

कामोदोपाङ्गमाख्याता कामोदासिह्मली बुधैः ॥ ८८० ॥

कामोदालक्षणोपेता ममन्द्रा कम्पधैवता ।

हरिपालीये—

सिह्मल्याख्याथ कामोदा पूर्णा कामोदिका समा ॥ ८८१ ॥

ईषन्मध्य(ममन्द्रा च धैवते कं)[1]पिता भवेत् ।

इति सिह्मालिकामोदा ॥८०॥

रत्नाकरे—

छायानाट्टा तु नट्टेव मन्द्रपञ्चमभूषिता ॥ ८८२ ॥

नट्टोपाङ्गं निषादेन गान्धारेण च कम्पिता ।

हरिपालीये—

छायापूर्वाऽथ नट्टा स्यात् षड्जांशन्याससंयुता ॥ ८८३ ॥

---

[1] मातृकायां हरिपालीयमूलग्रन्थे चायमंशः पतितः ।

गान्धारे च निषादे च कम्पिता मन्द्रपञ्चमा ।
परिपूर्णस्वरा चेयं कथिता रागवेदिभिः ॥ ८८४ ॥

इति च्छायानट्टा ॥८१॥

रत्नाकरे—

कोलाहला टक्कभाषा सग्रहांशा पवर्जिता ।
सधमन्द्रा मभूयिष्ठा कलहे गमकान्विता ॥ ८८५ ॥

एषा हरिपालीये पठिता ॥

इति कोलाहला ॥८२॥

रत्नाकरे —

हिन्दोलभाषा छेवाटी गापन्यासा धभूयसी ।
रिहीनांशग्रहन्यासषड्जा सगममन्द्रभाक् ॥ ८८६ ॥

सगतारोत्सवे हास्ये गेया गमकसंयुता ।

हरिपालीये नोक्ता ॥

इति च्छेवाटी ॥८३॥

रत्नाकरे—

भल्लाता[1] तदुपाङ्गं स्याद्रिहीना मन्द्रधैवता ॥ ८८७ ॥

1 'वल्लाते'ति रत्नाकरमूलग्रन्थपाठः ।

ध[1]न्यासांशग्रहा गेया शृङ्गारे शार्ङ्गिणोदिता ।

एषा हरिपालीये पतिता ॥[2]

इति भल्लाता ॥८४॥

रत्नाकरे—

मध्यमापञ्चमीजातः काकल्यन्तरसंयुतः ॥ ८८८ ॥

पञ्चमांशग्रहन्यासो समन्द्रः शुद्धपञ्चमः[3] ।
हृष्यकामूर्छनोपेतो गेयः कामारिदैवतः ॥ ८८९ ॥

चारुसञ्चारिवर्णश्च ग्रीष्मेऽह्नः प्रहरेऽग्रिमे ।
शृङ्गारहास्ययोः सन्धाववमर्शे प्रयुज्यते ॥ ८९० ॥

1 'स' इति रत्नाकरमूलग्रन्थपाठः ।

2 किन्तु हरिपालीयमूलग्रन्थे इदं रागलक्षणमेवमुक्तम् :

'भल्लातोऽथ भवेद्रागो हिन्दोलकसमुद्भवः ।
षड्जे न्याससम्पन्नो वर्जितर्षभः ।
षाडवो धैवते मन्द्रः कथितो राग..........' ।

अयञ्च सार्धश्लोकः भरतकोशे तथैव पठितः । यथा—

भल्लातोऽथ भवेद्रागो हिन्दोलकसमुद्भवः ।
षड्जेनांशग्रहन्याससम्पन्नो वर्जितर्षभः ।
षाडवो धैवते मन्द्रः कथितो रागवेदिभिः ॥ इति ।

षड्जेत्यादि भागे एवं समञ्जसमिति प्रतिभाति :—
षड्जे ग्रहांशन्यासैश्च सम्पन्नो वर्जितर्षभः ।

3 'मध्यसप्तकपञ्चमः' इति रत्नाकरमूलग्रन्थपाठः सिंहभूपालीयव्याख्यानुसारेण साधुः ।

हरिपालीये—

षड्जोदीच्यवतीजातिसम्भूतः पञ्चमो भवेत् ।
षड्जांशो मध्यमन्यासस्तोकश्च द्विश्रुतिस्वरौ ॥ ८९१ ॥

एवं लक्षणसंयुक्तः पञ्चमः स उदाहृतः ।

इति शुद्धपञ्चमः ॥८५॥

रत्नाकरे—

तद्भाषा दाक्षिणात्या स्याद्ग्रांशन्यासपञ्चमा[1] ॥ ८९२ ॥

ऋषभो ऽस्यामपन्यासस्तारा निपमधैवताः ।
प्रियस्मृतौ नियोगः ॥ ८९३ ॥

हरिपालीये—

अथ लघुप्राथमिका दाक्षिणात्या निगद्यते ।[2]
न्यासांशपञ्चमा पूर्णा जाता मालवपञ्चमात् ॥ ८९४ ॥

तारा निषादगान्धारे निषादे मन्द्ररूपिणी ।
समुपेता बहुत्वेन निषादर्षभधैवते ॥ ८९५ ॥

इति लघुदाक्षिणात्या ॥८६॥

[1] 'धैवते 'ति रत्नाकरमूलग्रन्थपाठः ।

[2] ग्रन्थकृता नोद्धृतः ।

रत्नाकरे—

अस्या विभाषान्धालिका मता ।
पञ्चमांशग्रहन्यासा न्यल्पा भूरीतरस्वरा ॥ ८९६ ॥

तारधा मन्द्रषड्जा च धापन्यासा गवर्जिता ।
वियुक्तबन्धने गेया शार्ङ्गदेवेन कीर्तिता ॥ ८९७ ॥

हरिपालीये—

अतः परं स्यादन्धाली जाता मालवपञ्चमात् ।
गान्धारे च परित्यक्ता मध्यमांशा च षाडवा ॥ ८९८ ॥

षड्जमन्द्रा गतारत्वं निषादे धैवते पुनः ।
मध्यमे मन्द्रतां प्राप्ता तथैव न्यासपञ्चमा ॥ ८९९ ॥

इत्यन्धाली ॥८७॥

रत्नाकरे—

मल्लारी तदुपाङ्गं स्याद्गहीना मन्द्रमध्यमा ।
पञ्चमांशग्रहन्यासा श्रृङ्गारे ताडिता मता ॥ ९०० ॥

हरिपालीये—

अन्धालिकासमुद्भूता मल्लार्यथ निगद्यते ।
पञ्चमांशग्रहा षड्जमन्द्रा गान्धारवर्जिता[1] ॥ ९०१ ॥

इति मल्लारी ॥८८॥

[1] पाठोऽयं हरिपालीयमूलग्रन्थस्थः । अस्मिन्स्थाने मातृकायां
‘ वङ्कालिजा भवेद्गेया शेषिकाम्मोदिका समा ।
मिषादस्फुरिता शेष मत्वारि च भवेदिह । ’
इति भ्रष्टपाठः वर्तते ।

रत्नाकरे—

अन्धाल्युपाङ्गं मल्लारः षड्जपञ्चमवर्जितः ।
धन्यासांशग्रहो मन्द्रगान्धारस्तारसप्तमः ॥ १०२ ॥

हरिपालीये नोक्तः ॥[1]

इति मल्लारः ॥८९॥

रत्नाकरे—

गेयः कर्णाटगौडस्तु षड्जन्यासग्रहांशकः ।

हरिपालीये—

अथ कर्णाटगौडाख्यो रागस्स्वस्थानताडितः ॥ १०३ ॥
पूर्णः षड्जांशकन्यासो रागविद्भिरुदीरिता ।

इति कर्णाटगौडः ॥९०॥

रत्नाकरे—

स एवान्दोलितष्षड्जे देशवालो रिपोज्झितः ॥ १०४ ॥

---

[1] किन्तु हरिपालीयमूलग्रन्थे रागलक्षणमिदमेवमुक्तम् :
मल्लारोऽप्यथ गान्धारवर्जितष्षाडवः पुनः ।
निषादस्फुरितः शेषे मल्लारीवद्धवेदिह ॥

हरिपालीये—

अनन्तरं देशवालगौडस्तु परिकीर्त्यते ।
आन्दोलितस्वरे षड्जे षाड्जीभूतांशसंयुतः ॥ १०५ ॥

औडुवः पञ्चमेनापि ऋषभेण विवर्जितः ।

इति देशवालगौडः ॥९१॥

रत्नाकरे—

गान्धारबहुलो मन्द्रताडितो रिपवर्जितः ॥ १०६ ॥

निषादांशग्रहन्यासः तौरुष्को गौड उच्यते ।

हरिपालीये—

ततस्तुरुष्कगौडस्स्यात्पञ्चमर्षभवर्जितः ॥ १०७ ॥

निषादांशश्च गान्धारबहुलो मन्द्रताडितः ।

इति तुरुष्कगौडः ॥९२॥

रत्नाकरे—

गान्धारतिरिपोपेता प्रस्फुरत् षड्जपञ्चमः ॥ १०८ ॥

ज्ञेयो द्राविडगौडोऽयं ग्रहांशन्यासपञ्चमः[1] ।

हरिपालीये—

अथ द्राविडगौडस्तु षड्जगान्धारपञ्चमे ॥ १०९ ॥

---

[1] 'सप्तमः' इति रत्नाकरमूलग्रन्थपाठः ।

स्फुरितस्तु निषादेन न्यासांशसहितस्स्मृतः ।

इति द्राविडगौडः ॥९३॥

इति गौडोपाङ्गानि ॥

इत्यधुनाप्रसिद्धानां पञ्चाशद्देशीरागानां जनकरागसहितं लक्षणं निरूपितम् ॥

अथ प्रसिद्धभाषाङ्गरागलक्षणं कथ्यते :—

रत्नाकरे—

षड्जे षाड्जीसमुद्भूतं श्रीरागं स्वल्पपञ्चमम् ॥ ९१० ॥

सन्यासांशग्रहं मन्द्रगान्धारं तारमध्यमम् ।
समशेषस्वरं वीरे शास्ति श्रीकरणाग्रणीः ॥ ९११ ॥

हरिपालीये नोक्तः[1] ॥

इति श्रीरागः ॥९४॥

रत्नाकरे—

षड्जग्रामे मन्द्रहीनः षड्जमध्यमया कृतः ।
बङ्गालोंऽशग्रहन्यासः षड्जस्तुल्याखिलस्वरः ॥ ९१२ ॥

इति बङ्गालः ॥९५॥

---

[1] किन्तु हरिपालीयमूलग्रन्थे रागलक्षणमिदमुक्तम् । यथा—

अथान्यष्टकरागाङ्गं श्रीरागो मध्यतारकः ।
गान्धारमन्द्रो ऋषभपञ्चमाभ्यां विवर्जितः ।
न्यासग्रहांशवान् षड्जे समस्वरविभूषितः । इति ।

मध्यमे कैशिकीजातः षड्जन्यासांशकग्रहः ।
बङ्गालस्तारमध्यस्थपञ्चमस्स्यात्समस्वरः ॥ ९१३ ॥

इति द्वितीयबङ्गालः ॥९६॥

एतौ हरिपालीये नोक्तौ ॥

रत्नाकरे—

ऋषभांशः पञ्चमान्तः स्यादपन्यासधैवतः ।
वीररौद्राद्भुतरसः पाल्पो मध्यमषाडवः ॥ ९१४ ॥

हरिपालीये नोक्तः ॥

इति मध्यमषाडवः ॥९७॥

रत्नाकरे—

धैवतांशग्रहन्याससंयुतस्स्यात्समस्वरः ।
तारमन्द्रोऽयमाषड्जगान्धारः शुद्धभैरवः ॥ ९१५ ॥

हरिपालीये नोक्तः ॥

इति शुद्धभैरवः ॥९८॥

रत्नाकरे—

षड्जे धैवतिकोद्भूतः षड्जतारसमस्वरः ।
मेघरागो मन्द्रहीनो ग्रहांशन्यासधैवतः ॥ ९१६ ॥

हरिपालीये नोक्तः ॥

इति मेघः ॥९९॥

रत्नाकरे—

षड्जे षाड्जीभवः षड्जग्रहांशान्तो निगोत्कटः ।
सोमरागः स्मृतो वीरे तारमन्द्रस्तु मध्यमः[1] ॥ ९१७ ॥

हरिपालीये—

सोमरागोऽथ षड्जांशग्रहन्याससमन्वितः ।
मध्यमे मन्द्रतारोयं सम्पूर्णस्सप्तभिस्स्वरैः ॥ ९१८ ॥

गान्धारे च निषादे च बहुत्वं समुपागतः ।

इति सोमरागः ॥१००॥

रत्नाकरे—

तारषड्जग्रहः षड्जे षड्जमध्यमिकोद्भवः ॥ ९१९ ॥

गतारमन्द्रः कामोदो धांशस्सान्तस्समस्वरः ।

इति कामोदः ॥१०१॥

षड्जे षाड्जीभवः षड्जग्रहांशन्याससंयुतः ॥ ९२० ॥

समस्वरोऽन्यकामोदो मन्द्रगान्धारसुन्दरः ।

इति द्वितीयकामोदः ॥१०२॥

एतौ हरिपालीये नोक्तौ ॥

---

1 'तारमध्यस्थमध्यमः' इति रत्नाकरमूलग्रन्थपाठः ।

रत्नाकरे—

गान्धारांशग्रहन्यासो मध्यमग्रामसम्भवः[1] ॥ ९२१ ॥

रिग[2]तारो मन्द्रहीनो रागस्स्यादाम्रपञ्चमः ।
शार्ङ्गदेवेन गदितो हास्याद्भुतरसाश्रयः ॥ ९२२ ॥

हरिपालीये--

अथाम्रपञ्चमो रागो जातो गान्धारपञ्चमात् ।
गान्धारांशग्रहन्यासो तारः षड्जनिषादयोः ॥ ९२३ ॥

मन्द्रस्थानेन संयुक्तः[3] सम्पूर्णस्सप्तभिस्स्वरैः ।

इत्याम्रपञ्चमः ॥१०३॥

**इति रत्नाकरहरिपालीयोक्ताः दश प्रसिद्धरागाः ॥**

रत्नाकरे—

शुद्धपञ्चमभाषा स्यात्कैशिकी मपभूयसी ॥ ९२४ ॥

पन्यासांशग्रहा मापन्यासा सगमतारभाक् ।
ईर्ष्यायां विनियोक्तव्या भाषाङ्गं केचिदूचिरे ॥ ९२५ ॥

समस्वरा रितारा चममन्द्रा चोत्सवे भवेत् ।

---

1 'मन्द्रमध्यसमुद्भवः' इति 'मध्यमान्ध्रीसम्भवः' इति च रत्नाकरमूलग्रन्थपाठः ।

2 'निग' इति रत्नाकरमूलग्रन्थपाठः ।

3 'सन्त्यक्तः' इति हरिपालीयमूलग्रन्थपाठः ।

हरिपालीये—

कथ्यते कैशिकी पूर्वं शुद्धपञ्चमसम्भवा ॥ ९२६ ॥

सम्पूर्णा मध्यमे मन्द्रा तारसप्तस्वरा क्रमात् ।
पञ्चमांशग्रहन्यासा तारर्षभसमन्विता ॥ ९२७ ॥

इति कैशिकी ॥१०४॥

रत्नाकरे—

पञ्चमादेव सौराष्ट्री भाषा पान्तग्रहांशका ।
रिहीना सगधैस्ताराममन्द्रा मपभूयसी ॥ ९२८ ॥

नियुक्ता सर्वभाषायां (? भावेषु) मुनिभिर्गमकान्विता ।

हरिपालीये—

ततः परं स्यात्सौराष्ट्री जाता मालवपञ्चमात् ॥ ९२९ ॥

न्यासांशपञ्चमा त्यक्तर्षभा सा षाडवा भवेत् ।

इति सौराष्ट्री ॥१०५॥

रत्नाकरे—

सांशग्रहान्ता सौराष्ट्री टक्करागे ऽतिभूरिनी ॥ ९३० ॥

सरि[1]तारा ममन्द्रा च पहीना करुणे भवेत् ।

हरिपालीये नोक्ता ॥

इति द्वितीयसौराष्ट्री ॥१०६॥

---

1 ‘भूरी’ति रत्नाकरमूलग्रन्थपाठः ।

रत्नाकरे—

टक्कभाषैव ललिता ललितैरुत्कटैः स्वरैः ॥ ९३१ ॥

षड्जांशग्रहणन्यासा षड्जमन्द्रा रिपोज्झिता ।
धीरैर्वीरोत्सवे प्रोक्ता तारगान्धारधैवता ॥ ९३२ ॥

हरिपालीये—

अथाङ्गं टक्करागस्य ललिता कथ्यतेऽधुना ।
षड्जन्यासा तथांशा स्यात्कथिता पूर्वसूरिभिः ॥ ९३३ ॥

इति प्रथमललिता ॥ १०७॥

रत्नाकरे—

भिन्नषड्जेऽपि ललिता ग्रहांशन्यासधैवता ।
रिगमैर्ललितैस्तारमन्द्रैर्युक्ता धमन्द्रभाक् ॥ ९३४ ॥

प्रयोज्या ललिते स्नेहे मतङ्गमुनिसम्मता ।

इति द्वितीयललिता ॥१०८॥

रत्नाकरे—

चतुर्धा सैन्धवी तत्र टक्कभाषा रिपोज्झिता ॥ ९३५ ॥

सन्यासांशग्रहा सान्द्रा गमकैर्लङ्घितस्वरैः ।
गम[1]तारा षड्जमन्द्रा गेया सर्वरसेष्वसौ ॥ ९३६ ॥

[1] 'सग' इति रत्नाकरमूलग्रन्थपाठः ।

हरिपालीये—

[1]अथ स्यात्सैन्धवी नाम्ना टक्करागसमुद्भवा ।
षड्जान्ता मध्यमांशा समन्द्रस्थानसमाश्रया ॥ ९३७ ॥

औडुवा हीनतारासौ गान्धारे परिकीर्तिता ।

इति प्रथमसैन्धवी ॥१०९॥

रत्नाकरे—

सैन्धवी पञ्चमे ऽप्यस्ति ग्रहांशन्यासपञ्चमा ॥ ९३८ ॥

रिपापन्याससंयुक्ता रम्या सगमकैस्स्वरैः ।
नीतरै रिबहुस्तारपा पूर्वविनियोगिनी ॥ ९३९ ॥

हरिपालीये—

[2]अपरा सैन्धवी ख्याता शुद्धपञ्चमसम्भवा ।
अपन्यासग्रहांशेषु तथा षड्जस्वरादिका ॥ ९४० ॥

तारर्षभा षड्जमन्द्रा निषादेन विवर्जिता ।
ऋषभे धैवते दीप्ता सैन्धवी ख्यापिता बुधैः ॥ ९४१ ॥

इति द्वितीयसैन्धवी ॥११०॥

रत्नाकरे—

मालवे कैशिके ऽप्यस्ति सैन्धवी मृदुपञ्चमा ।
समन्द्रा निगनिर्मुक्ता षड्जन्यासग्रहांशका ॥ ९४२ ॥

---

[1] इदं सैन्धवीरागलक्षणं मातृकायां स्वस्थानभ्रष्टतया लिखितम् ।

प्रयोज्या सर्वभावेषु श्रीसोढलसुतोदिता ।

हरिपालीये नोक्ता ॥

इति तृतीयसैन्धवी ॥१११॥

रत्नाकरे—

सैन्धवी भिन्नषड्जे ऽपि न्यासांशग्रहधैवता ॥ ९४३ ॥

उद्दीपने नियोक्तव्या धमन्द्रा रिपवर्जिता ।

हरिपालीये—

[1]ततस्स्यात्सैन्धवी नाम भिन्नषड्जसमुद्भवा ॥ ९४४ ॥

औडुवा धैवतन्यासग्रहांशपरिशोभिता ।
स्वरेण पञ्चमाख्येन रिषभेण विवर्जिता ॥ ९४५ ॥

इति चतुर्थसैन्धवी ॥११२॥

इति चतुर्विधसैन्धवीलक्षणम् ॥

हिन्दोलभाषा गौडी स्यात् षड्जन्यासग्रहांशका ।
पञ्चमोत्पन्नगमकबहुला धरिवर्जिता ॥ ९४६ ॥

---

1. इदं सैन्धवीरागलक्षणं मातृकायां स्वस्थानभ्रष्टतया लिखितम् ।

षड्जमन्द्रा प्रयोक्तव्या प्रियसम्भाषणे बुधैः ।

हरिपालीये—

अतः परं भवेद्गौडी[1] हिन्दोलस्याङ्गमीरिता ॥ ९४७ ॥

निषादे बहुतां याता षड्जन्यासग्रहांशका ।
षाडवा[2] रिषभत्यक्ता धैवतेन च वर्जिता ॥ ९४८ ॥

इति गौडी ॥११३॥

रत्नाकरे—

ग्रहांशन्यासषड्जान्या गौडी मालवकैशिके ।
मतङ्गोक्ता तारमन्द्रषड्जा भूरिनिषादभाक् ॥ ९४९ ॥

प्रयोज्या करुणे धीरै[3]र्वीरे त्वन्यैः प्रयुज्यते ।

हरिपालीये—

अथ गौडिसंज्ञिकान्या ग्रहांशन्यासधैवता ॥ ९५० ॥

आरर्षभा च गान्धारनिषादाभ्यां विवर्जिता ।
षड्जर्षभाभ्यां बहुला कथिता रागवेदिभिः ॥ ९५१ ॥

इति द्वितीयगौडी ॥११४॥

---

[1] रागोयं 'गौरी' इति नाम्ना हरिपालीयोक्तमिति भरतकोशे दर्शितः ।

[2] 'औडुवे'ति पाठस्समीचीनः ।

[3] 'रणरणके' इति रत्नाकरमूलग्रन्थपाठः ।

रत्नाकरे—

याष्टिके त्रावणी भाषा पञ्चमस्य ग्रहांशसा ।
पान्ता सरिमपैर्भूरिसङ्गतद्विश्रुतिर्मता || ९५२ ||

हरिपालीये नोक्ता[1] ||

इति त्रावणी ||११५||

रत्नाकरे—

एषा भाषाङ्गमन्येषां धग्रहांशा रिपोज्झिता[2] ।
अतारा प्रार्थने मन्द्रनिग[3]व्याप्तोरुमध्यमा || ९५३ ||

भाषा हर्षपुरी षड्जमन्द्रा मालवकैशिके ।
सन्यासांशग्रहा तारमपा हर्षे धवर्जिता || ९५४ ||

हरिपालीये नोक्ता ||[4]

इति हर्षपुरी ||११६||

---

1. किन्तु हरिपालीयमूलग्रन्थे त्रावणीरागलक्षणमेवमुक्तम् :
   तदनु त्रावणी नाम्ना मिश्रषड्जसमुद्भवा ।
   धैवतांशयुता सेय वर्जितर्षभपञ्चमा ।
   अयं तु मेवनादस्स्याद् ग्रन्थेस्मि(न्वै) समीरितः ।
2. 'निपोज्झिते'ति रत्नाकरमूलग्रन्थपाठः ।
3. 'मन्द्रधग' इति रत्नाकरमूलग्रन्थपाठः ।
4. किन्तु हरिपालीयमूलग्रन्थे 'यद्यस्य मूर्छनामध्या तदा हर्षपुरी भवेदि'ति लक्षणं वर्तते ; अस्येतिस्थाने मालवश्रीरिति विवक्षितः ।

रत्नाकरे—

पञ्चमस्य विभाषा स्याद्भम्माणी मन्द्रषड्जभाक् ।
पान्तांशादिः समनिपैस्तारैस्त्यक्तरिरुत्सवे ॥ ९५५ ॥

हरिपालीये—

मालपञ्चमसम्भूता भम्माणी चाथ लक्ष्यते ।
मन्द्रतारा च षड्जे स्यान्न्यासांशग्रहपञ्चमा ॥ ९५६ ॥

गान्धारे पञ्चमे चापि बहुत्वं समुपेयुषी ।
ऋषभेण परित्यक्ता[1] विभाषेयमुदीरिता ॥ ९५७ ॥

इति भम्माणी ॥११७॥

रत्नाकरे—

धैवत्या मध्यमायाश्च सम्भूतष्टक्ककैशिकः ।
धैवतांशग्रहन्यासः काकल्यन्तरराजितः ॥ ९५८ ॥

सारोही सप्रसन्नादिरुत्तरायतयान्वितः ।
उद्भटे नटने कामग्रस्ते कञ्चुकिकर्तृके ॥ ९५९ ॥

प्रवेशे तुर्ययामे ऽह्नो बीभत्से च भयानके ।
प्रयोक्तव्यो महाकालमन्मथप्रीतये बुधैः ॥ ९६० ॥

हरिपालीये—

षड्जग्रामेण सम्बद्धो लक्ष्यते टक्ककैशिकः ।
षड्जमध्यमपूर्वाभ्यां ग्रामाभ्यामेव जायते ॥ ९६१ ॥

---

1 'क्वचित्त्यक्ते'ति रत्नाकरमूलग्रन्थपाठः ।

चतुःश्रुतिस्वरयुतो धैवतो ग्रहणेंऽशके ।

न्यासे निषादगान्धारौ काकल्यन्तरसंयुतौ ॥ ९६२ ॥

सम्पूर्णो लक्षितश्चैवं टक्ककैशिकलक्षणम् ।

इति टक्ककैशिकः ॥११८॥

रत्नाकरे—

मालवा तस्य भाषा स्याद्ग्रहांशन्यासधैवता ॥ ९६३ ॥

षड्जधौ सङ्गतौ तत्र स्यातामृषभपञ्चमौ ।

हरिपालीये नोक्ता ॥

इति मालवा ॥११९॥

रत्नाकरे—

गान्धारांशग्रहा धान्ता द्राविडी तद्विभाषिका ॥ ९६४ ॥

द्विश्रुतीसङ्गतौ तत्र भवेतां षड्जधैवतौ ।

हरिपालीये नोक्ता ॥

इति द्राविडीविभाषा ॥१२०॥

इति प्रसिद्धरागभाषाविभाषालक्षणं निरूपितम् ॥

इति रत्नाकरहरिपालीयोक्तः रागसर्वस्वलक्षणप्रपञ्चः ॥

अथ स्वरमेलकलानिधौ कतिचिदुत्तममध्यमाधमरागस्वरूपं निरूप्यते :—

देशीरागाश्च सकलाः षड्जग्रामसमुद्भवाः ॥ १६५ ॥

ग्रहांशन्यासमन्द्रादिषाडवौडुवपूर्णकाः ।
देशीत्वात्सर्वरागेषु भवन्ति न भवन्ति वा ॥ १६६ ॥

तथापि लक्ष्यमाश्रित्य गानलक्ष्मानुसृत्य च ।
विंशत्युत्तमरागाणामसङ्कीर्णस्वरूपिणाम् ॥ १६७ ॥

मध्यमानां तथा पञ्चदशानाञ्च ततः परम् ।
अधमानाञ्च केषाञ्चिल्लक्षणं वक्ष्यतेऽधुना ॥ १६८ ॥

सम्पूर्णस्वरसंयुक्तः षड्जन्यासग्रहांशकः ।
यो गेयः पश्चिमे यामे नाटीरागस्स उच्यते ॥ १६९ ॥

इति नाटी ॥१२१॥

षड्जांशा सग्रहा षड्जन्यासा सम्पूर्णतां गता ।
सर्वयामेषु या गेया सा वरालीति कीर्तिता ॥ १७० ॥

इति वराली ॥१२२॥

सालङ्गनाटी सम्पूर्णा सन्यासा सग्रहापि च ।
षड्जांशा पश्चिमे यामे गेयासौ कथिता बुधैः ॥ ९७१ ॥

इति सालङ्गनाटी ॥१२३॥

शुद्धरामक्रियारागस्सम्पूर्णस्सग्रहोऽपि च ।
षड्जांशन्याससम्पन्नो गेयो मध्यन्दिनात्परम् ॥ ९७२ ॥

इति शुद्धरामक्रिया ॥१२४॥

सग्रहा सांशका षड्जन्यासा सम्पूर्णतायुता ।
मुखारी सर्वसमये गातुं योग्या प्रकीर्तिता ॥ ९७३ ॥

इति मुखारी ॥१२५॥

सम्पूर्णो भैरवीरागस्सन्यासः सांशको मतः ।
षड्जग्रहस्तथा गेयो यामे ऽह्नः पश्चिमे च सः ॥ ९७४ ॥

इति भैरवी ॥१२६॥

सन्यासश्चाहरीरागः सांशष्षड्जग्रहोऽपि च ।
सम्पूर्णश्चरमे यामे गातव्यो ऽसौ विचक्षणैः ॥ ९७५ ॥

इत्याहरी ॥१२७॥

सामन्तरागष्षड्जांशष्षड्जन्यासश्च सग्रहः ।
दिनस्य चरमे यामे गेयस्सम्पूर्णतायुतः ॥ ९७६ ॥

इति सामन्तः ॥१२८॥

निन्यासांशग्रहोपेतो रागः कन्नडगौलकः ।
सम्पूर्णोऽपि कदाचित्स्यादारोहे त्यक्तमध्यमः[1] ॥ ९७७ ॥

गेयो ऽह्नः पश्चिमे याम उत्कलानामतिप्रियः ।

इति कन्नडगौलः ॥१२९॥

गन्यासांशग्रहः[2] पूर्णो देशाक्षीराग उच्यते ॥ ९७८ ॥

आरोहे मनिवर्ज्यो ऽसौ पूर्वयामे च गीयते ।

इति देशाक्षी ॥१३०॥

इत्युत्तमास्सम्पूर्णाः दश ॥

मध्यमांशग्रहन्यासा बौली पञ्चमवर्जिता ॥ ९७९ ॥

षाडवा सा च गातव्या दिनस्यापर[3]भागतः ।

इति बौली ॥१३१॥

रागश्शुद्धवसन्तोऽयं सांशन्यासग्रहस्तथा ॥ ९८० ॥

पवर्जितष्षाडवो ऽपि ह्यवरोहे पसंयुतः ।
एवं लक्ष्ये प्रसिद्धो ऽसौ गेयो यामे तुरीयके ॥ ९८१ ॥

इति शुद्धवसन्तः ॥१३२॥

---

1 'त्यक्तधैवतः' इति स्वरमेलकलानिधिमूलग्रन्थपाठः ।

2 'सन्यासांशग्रहः' इति तत्रैव ।

3 'दिवसस्यादी'ति तत्रैव ।

रिवर्जिता मालवश्रीः सांशन्याससग्रहा[1]ऽपि च ।
गीयते सर्वयामेषु सर्वदा मङ्गलप्रदा ॥ ९८२ ॥

इति मालवश्रीः ॥१३३॥

[पवर्जिता रिग्रहांशन्यासा षाडविका मता ।

कदाचिदवरोहे सा पयुता घूर्जरी भवेत् ।

दिनस्य प्रथमे यामे गेया सा गानकोविदैः ।]

इति घूर्जरी ॥[2]

रि[3]ग्रहांशन्यासयुक्ता ललिता पञ्चमोज्झिता ।
षाडवा प्रथमे यामे गेया ऽसौ शोभनप्रदा ॥ ९८३ ॥

इति ललिता ॥१३४॥

इत्युत्तमषाडवाः पञ्च ॥

हिन्दोलको रिधत्यक्त औडुवः सग्रहांशकः ।
सन्यासः शुभदो गेयस्स रागस्सार्वकालिकः ॥ ९८४ ॥

इति हिन्दोलः ॥१३५॥

---

1 'सांशः स्यात्सग्रह' इति स्वरमेलकलानिधिमूलग्रन्थे पाठान्तरम् ।

2 रागोऽयं उद्देशप्रपञ्चे गृहीतोऽपि मातृकायां लक्षणकथनावसरे नोक्तः ।

3 'स' इति स्वरमेलकलानिधिमूलग्रन्थपाठः ।

धैवतांशग्रहन्यासो रागो मल्हारसंज्ञितः ।
औडुवः सप (?गनि) वर्जोऽसौ (प्रभाते गीयते बुधैः)[1] ॥ ९८५ ॥

इति मल्हारः ॥१३६॥

रागो धन्यासिसंज्ञोयं बहुशो रिधवर्जितः ।
गेयो प्रातरसौ तज्ज्ञैः सन्याससग्रह औडुवः ॥ ९८६ ॥

इति धन्यासी ॥१३७॥

रागो मालवगौलश्च निन्यासांशग्रहो मतः ।
औडुवो रिपवर्जश्च कदाचिद्रिपसंयुतः ॥ ९८७ ॥

गेयस्सायाह्नसमये रागाणामुत्तमोत्तमः ।

इति मालवगौलः ॥१३८॥

सग्रहांशश्च सन्यासो श्रीरागो गधवर्जितः ॥ ९८८ ॥

औडुवोऽपि ह्यसौ रागः कदाचिद्गधसंयुतः ।
सायाह्ने गीयतामेषः सर्वसम्पत्प्रदायकः ॥ ९८९ ॥

इति श्रीरागः ॥१३९॥

इत्युक्तमौडुवाः पञ्च ॥

केदारगौलस्सम्पूर्णो निन्यासो निग्रहो ऽपि च ।
निषादांशश्चतुर्थेऽह्नः प्रहरे गीयते बुधैः ॥ ९९० ॥

इति केदारगौलः ॥१४०॥

---

1 अयमंशः मातृकायां पतितः ।

नादरामक्रियारागः षड्जन्यासश्च सग्रहः ।
षड्जांशकश्च सम्पूर्णो गेयो यामे तुरीयके ॥ ९९१ ॥

इति नादरामक्रिया ॥१४१॥

सन्यासा सग्रहा सांशा सम्पूर्णाऽपि क्वचिद्भवेत् ।
आरोहे मनिवर्जाऽसौ काम्भोदी सायमीरिता ॥ ९९२ ॥

इति काम्भोदी ॥१४२॥

षड्जांशा सग्रहा षड्जन्यासा सामवरालिका ।
सम्पूर्णा सर्वदा गेया सामवेदसमुद्भवा ॥ ९९३ ॥

इति सामवराली ॥१४३॥

रीतिगौलो निषादांशो निन्यासग्रह एव च ।
सम्पूर्णो गीयते सायं मुखारी रागमाश्रितः ॥ ९९४ ॥

इति रीतिगौलः ॥१४४॥

हेज्जुज्जिरागस्सम्पूर्णो मन्यासो मग्रहांशकः ।
गेयो ऽह्नः पश्चिमे यामे काकल्यन्तरभूषितः ॥ ९९५ ॥

इति हेज्जुज्जी ॥१४५॥

गांशो नारायणीरागो गान्धारन्यासकग्रहः ।
सम्पूर्णः प्रातरुद्गेयो ऽवरोहे रिच्युतः क्वचित् ॥ ९९६ ॥

इति नारायणी ॥१४६॥

पूर्णो वेलावुलीरागो धांशन्यासस्तु धग्रहः ।
क्वचिद्रिपाभ्यां न्यूनः स्यादवरोहे प्रभातजः ॥ ९९७ ॥

इति वेलावुली ॥१४७॥

इति मध्यमरागेषु सम्पूर्णा अष्टौ ।

रागः कन्नडबङ्गालो गान्धारग्रहगांशकः ।
गन्यास रिषभन्यूनः प्रातर्गेयस्स षाडवः ॥ ९९८ ॥

कन्नडबङ्गालः ॥१४८॥

पाडीरागस्तु सन्यासः सांशष्षड्जग्रहस्मृतः ।
तुरीययामे गेयो ऽसौ गहीनष्षाडवो मतः ॥ ९९९ ॥

इति पाडी ॥१४९॥

वसन्तभैरवीरागः सग्रहः पञ्चमोज्झितः ।
षड्जांशः षड्जकन्यासः प्रातर्गेयस्स षाडवः ॥ १००० ॥

इति वसन्तभैरवी । १५०॥

सांशो गुण्डक्रियारागो सग्रहन्यासषाडवः ।
धवर्जितः पूर्वयामे गेयो धैवतयुक् क्वचित् ॥ १००१ ॥

इति गुण्डक्रिया ॥१५१॥

इति मध्यमरागेषु षाडवाश्चत्वारः ॥

मध्यमादिर्मग्रहांशो मन्यासो रिधवर्जितः ।
औडुवः पश्चिमे यामे दिनस्य परिगीयते ॥ १००२ ॥

इति मध्यमादिः ॥१५२॥

भूपालरागः सन्यासस्सांशः सग्रह एव च ।
मनिलोपादौडुवः स्यात्प्रातःकाले च गीयते ॥ १००३ ॥

इति भूपालः ॥१५३॥

रिग्रहो रेवगुप्तिस्स्यात् रिन्यासो मनिवर्जितः ।
औडुवश्चरमे यामे दिवसस्य स गीयते ॥ १००४ ॥

इति रेवगुप्तिः ॥१५४॥

इति मध्यमरागेष्वौडुवास्त्रयः ॥

अथाचाधमरागाणां केषाञ्चिल्लक्ष्म कथ्यते ।
सावेरिरागो धन्यासो धांशो धग्रह एव च ॥ १००५ ॥

औडुवो सप(?गनि)लोपेन प्रातर्गेयो विचक्षणैः ।

इति सावेरी ॥१५५॥

सौराष्ट्ररागस्सम्पूर्णः षड्जन्यासश्च सग्रहः ॥ १००६ ॥

षड्जांशो गीयते सायंसमये गीतकोविदैः ।

इति सौराष्ट्रः । १५६॥

घण्टारवो धैवतांशो धग्रहन्यास एव च ॥ १००७ ॥

गलोपात् षाडवः प्रोक्तः सर्वकालेषु गीयते ।

इति घण्टारवः ॥१५७॥

रागो नागध्वनिः पूर्णः षड्जांशः सग्रहोऽपि च ॥ १००८ ॥

षड्जन्यासो गीयते ऽसौ सर्वदा गीतकोविदैः ।

इति नागध्वनिः ॥१५८॥

सन्यासस्सग्रहश्चैव सांशस्सम्पूर्ण एव च ॥ १००९ ॥

सोमरागस्सदा गेयो मन्द्रमध्यमभूपितः ।

इति सोमरागः ॥१५९॥

पञ्चमांशग्रहन्यास आन्दालीराग ईरितः ॥ १०१० ॥

निगलोपादौडुवोऽयं मध्यमादिवदुज्ज्वलः ।

इत्यान्दाली ॥१६०॥

शङ्कराभरणो रागः सम्पूर्णस्सांशकस्स्मृतः ॥ १०११ ॥

षड्जन्यासग्रहस्सोऽयं सामन्तच्छायामाश्रितः ।

इति शङ्कराभरणः ॥१६१॥

भिन्नषड्जाख्यरागोऽयं सग्रहः परिकीर्तितः ॥ १०१२ ॥

सांशन्यासः षाडवोऽयं मलोपाद्गीयते सदा ।

इति भिन्नषड्जः ॥१६२॥

एवं प्रकारेणोन्नेयाः शेषा रागा विचक्षणैः ॥ १०१३ ॥

इति स्वरमेलकलानिधिग्रन्थोक्तोत्तममध्यमाधमरागलक्षणम् ॥

अथ सकलमतसङ्ग्रहोक्तं स्त्रीपुरुषरागलक्षणं लक्ष्यते :—

भैरवो भूपतिश्चैव श्रीरागो रागपञ्जरः ।
वसन्तो मालवश्चैव बङ्गालो नाटकस्तथा ॥ १०१४ ॥

अष्टरागा इमे धीरैः पुंरागा इति सूरिभिः ।

एतेषां जातिनिर्णयः कथ्यते :—

भैरवो भूपतिश्चैव ऋग्वेदो विप्रजातिजः ॥ १०१५ ॥

वसन्तमालवौ साम्नि वैश्यजातिषु सम्भवौ ।
बङ्गालश्चापि नट्टा च शूद्रजातिष्वथर्वणे ॥ १०१६ ॥

देवक्रिया मेघरञ्जी कुरञ्जी[1] च ततः परम् ।
वेलावुली मलहरी बौलग्न्यान्धाली तथैव च ॥ १०१७ ॥

माहुरी चैव भल्लाती शङ्कराभरणस्तथा ।
गुण्डक्रिया घूर्जरी च गौली कर्णाटगौलिका ॥ १०१८ ॥

धन्यासिका च काम्भोजी देशाक्षी चाहरी तथा ।
नारायणी गौल नाम स्त्रीरागा इति कीर्तिताः[2] ॥ १०१९ ॥

---

1 मातृकायां पतितः ।

2 अस्योद्देशप्रपञ्चे देशी, ललिता, तोडी, रामक्रिया, वराली, कौशीति षड्रागाः पतिताः, शङ्कराभरणोऽप्याधिक्यतया कथितः ।

देवक्रिया मेघरञ्जी कुरञ्जी भैरवस्त्रियः ।
वेलावुली मलहरी बौली भूपालयोषितः ॥ १०२० ॥

श्रीरागपत्न्य अन्धाली भल्लानी माहुरीति च ।
देशी च ललिता तोडी रागपञ्चरयोषितः ॥ १०२१ ॥

रामक्रिया वराली च कौशी वासन्तयोषितः ।
गुण्डक्रिया घूर्जरी च गौली मालवयोषितः ॥ १०२२ ॥

बङ्गालयोषितः पूर्वैस्तथा कर्णाटगौलिका ।
धन्यासिका च काम्भोजी भरतज्ञैः प्रकीर्तिताः ॥ १०२३ ॥

देशाक्षी चाह्वरी नारायणी नट्टस्य चाङ्गनाः ।
स्त्रीपुंरागास्समाख्याताः द्वात्रिंशद्गीतपारगैः ॥ १०२४ ॥

## अथ रागाणां गीतकाला उच्यन्ते[1] :—

[प्रातर्गुण्डकरी सकृन्मलहरी । मध्याह्नेऽपि चराकृद्रयधो कर्णाटगौलाह्वयः । सायं मालविका रा(म)कृतीति सुधियो गायन्ति सायन्तने । ?][2]

सारङ्गो गौलमपरं प्रत्यूषतो भैरवी ।
देशाक्षी भैरवी शुद्धा सारङ्गाख्या च भैरवी ॥ १०२५ ॥

देवक्री रक्तहंसी च माहुरी रागरञ्जिका ।
एते सूर्यांशका जाताः सायङ्काले तु निन्श्चिताः ॥ १०२६ ॥

---

[1] खण्डमिदं चालुक्यचक्रवर्तिजगदेकमल्लविरचितसङ्गीतचूडामणिनामग्रन्था-दुद्धृतमिति भरतकोशाज्ज्ञायते ।

[2] अस्य भागस्याकराभावात् मातृकायां यथा दृष्टं तथैवात्र निवेशितम् ।

प्रभाते गीयते (एन?) एतत्स नरस्सुखमेधते ।[1]
शुद्धनट्टा च नट्टा सारङ्गाख्या च वरालिका ॥ १०२७ ॥

वराली (गौ?ता?) द्राविडा देशीरागवरालिका ।
छायागौली तथा चार्या माहुर्यन्धालिकी तथा ॥ १०२८ ॥

मल्हारिका तथा छाया गौली कर्णाटकाह्वया ।
गौलो मालवगौलश्च रामक्री च तथैव च ॥ १०२९ ॥

छायारङ्गी........[2] छाया सर्ववरालिका ।
कर्णाटाह्वयबङ्गाला इत्येते चन्द्रमांशजाः ॥ १०३० ॥

एते रागा विशेषेण प्रातःकाले तु निन्दिताः ।
सायमेषां प्रगानेन चोन्नतिंश्रियमाप्नुयात् ॥ १०३१ ॥

एतान्विपर्यासं कृत्वा गाता यस्तु नराधमः ।
पापव्याधींश्च दारिद्र्यदुःखादीन् स लभेन्नरः ॥ १०३२ ॥

उक्तेतराणां रागाणां न वेलानिर्णयः क्वचित् ।
अवेलरागमाकर्ण्य (योज्ञ?) अज्ञदोषप्रशान्तये ॥ १०३३ ॥

ईशानश्च हरिं स्तुत्वा मध्यमादिमनन्तरम् ।
गायेद्वा श्रुणुयाद्वापि सर्वपापैः प्रमुच्यते[3]* ॥ १०३४ ॥

---

1 'प्रगायति प्रभाते यः स' इति भरतकोशे पठितः ।

2 अत्र चत्वार्यक्षराणि त्रुटितानि ।

3 रागाणां गेयकालविनियोगप्रवृत्तोऽयमंशः भरतकोशे कश्चिच्छुद्धतरया पठितः । यथा

## मतान्तरे

विप्रौ भैरवभूपालौ क्षत्रौ श्रीरागपञ्जरौ ।
वैश्यौ वसन्तमालव्यौ शूद्रौ बङ्गालनाटकौ ॥ १०३५ ॥

## एतेषां रागाणां स्वरवर्ज्या उच्यन्ते :—

भूपालो निमवर्जश्च सावेरी निगवर्जिता ।
निमहीना रेवगुप्तिर्धन्यासी रिधवर्जिता ॥ १०३६ ॥

रिपहीना मलहरी धपोना मेघरञ्जिका ।
गौलो मालवपूर्वो च रिपवर्जो भवेत्तथा ॥ १०३७ ॥

हिन्दोलो रिपवर्जश्च ह्येत औडुवसंज्ञकाः ।
धवर्जा गौलरागस्स्याद्धौली मध्यमवर्जिता ॥ १०३८ ॥

वसन्तरागो हिन्दोलपूर्वा रिषभवर्जिता ।
निषाद्वर्जो बङ्गालो गवर्जा मधुमाधवी ॥ १०३९ ॥

---

* 'शुद्धनट्टा सालगा च नाटा शुद्धवराटिका ।
वराटी द्राविडी च देशी नागवराटिका ॥

छायावराटिका च स्यादाहुर्यन्धालिका मता ।
मल्लारिका तदा छाया गौडी कर्णाटिकाह्वया ॥

गौडो मालवगौडश्च रामक्री रीतिरुत्तरा ।
छाया रामकृतीरङ्गछाया स्वरवराटिका ॥

कर्णाटाह्वयबङ्गालसहिताश्चन्द्रमोऽशु(श)जाः ।
सायमेते प्रगातव्यास्तस्य श्रीरतुला भवेत् ॥

एतान्प्रातः परित्यज्येद्वृद्धिकामीह मानवः ।
अनिरुक्ते तु रागाणां न वेलानिर्णयः क्वचित् ॥

मालवश्री रिवर्जा च षाडी गान्धारवर्जिता ।
पवर्जा ललिता चैव घण्टारागो गवर्जितः ॥ १०४० ॥

नव षाडवरागाश्च शेषाः पूर्णा इतीरिताः ।
शार्ङ्गदेवादि मुनिभिः गीतमिश्रादि कोविदैः ॥ १०४१ ॥

इति मतान्तरोक्तः स्त्रीपुरुषरागषाडवौडुवरागनिर्णयः ॥

इति नानामतोक्तो रागप्रपञ्चः ॥

एतद्रागपरीक्षकस्य वाग्गेयकारकत्वात् प्रस्तावानुसारेण रत्नाकरोक्तं वाग्गेयलक्षणं कथ्यते :—

वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते ।
वाचं गेयञ्च कुरुते यः स वाग्गेयकारकः ॥ १०४२ ॥

शब्दानुशासनज्ञानमभिधानप्रवीणता ।
छन्दप्रभेदवेदित्वमलङ्कारेषु कौशलम् ॥ १०४३ ॥

रसभावपरिज्ञानं देशस्थितिषु चातुरी ।
अशेषभाषाविज्ञानं कलाशास्त्रेषु कौशलम् ॥ १०४४ ॥

तौर्यत्रितयचातुर्यं हृद्यशारीरशालिता ।
लयतालकलाज्ञानं (विवेको ऽनेककाकुषु)[1] ॥ १०४५ ॥

प्रभूतप्रतिभोद्भेदभाक्त्वं सुभगगेयता ।
देशीरागेष्वभिज्ञत्वं वाक्पटुत्वं सभाजयः ॥ १०४६ ॥

---

[1] मातृकायां पतितः ।

रागद्वेषपरित्यागः साधु[1]त्वमुचितज्ञता ।
अनुच्छिष्टोक्तिनिर्बन्धो नूत्नधातुविनिर्मितिः ॥ १०४७ ॥

परचित्तपरिज्ञानं प्रबन्धेषु प्रगल्भता ।
द्रुतगीतिविनिर्माणं पदान्तःविदग्धता ॥ १०४८ ॥

त्रिस्थानगमकप्रौढिर्विविधालप्तिनैपुणम् ।
अवधानं गुणैरेभिर्वरो वाग्गेयकारकः ॥ १०४९ ॥

इत्युत्तमवाग्गेयकारलक्षणम् ॥

विदधानो ऽधिकं धातुं मातुं मन्दस्तु मध्यमः ।
धातुमातुविदप्रौढः प्रबन्धेष्वपि मध्यमः ॥ १०५० ॥

इति मध्यमवाग्गेयकारः ॥

रम्यमातुविनिर्माता ह्यधमो मन्दधातुकृत् ।

इत्यधमः ॥

वरो वस्तुकविर्वर्णकविर्मध्यम उच्यते ॥ १०५१ ॥

कुट्टिकारो ऽन्यधातौ तु मातुकारः प्रकीर्तितः ।

इति रत्नाकरोक्तमुत्तममध्यमाधमवाग्गेयकारलक्षणम् ॥

हरिपालीये

शुद्धसङ्कीर्णदेश्यादि प्रबन्धान् यश्च गायति ॥ १०५२ ॥

---

[1] 'साद्र' इति रत्नाकरमूलग्रन्थपाठः ।

गायकस्यैव तस्याथ लक्षणं कथ्यते स्वयम् ।
अत्युत्तमो भवेदादावुत्तमो मध्यमस्ततः ॥ १०५३ ॥

कनिष्ठातिकनिष्ठश्चेत्येते वाग्गेयकारकाः ।
मातृकानामकः पूर्वं पञ्चतालस्वराभिधः ॥ १०५४ ॥

गद्यवृत्त तथा रागकदम्बश्च समाह्वय ।
तालार्णवस्तथा नाम्ना करणं स्वरपूर्वकम् ॥ १०५५ ॥

करणञ्चित्रपर्वञ्च करणं तेनपूर्वकम् ।
इति शुद्धप्रबन्धानां रूढगाने विशारदः ॥ १०५६ ॥

ध्रुवाख्यो मण्ठनामा च प्रतिमठो ऽथ रूपकम् ।
अट्टताल्येकतालीति निर्दिष्टानां मनीषिभिः ॥ १०५७ ॥

एवं देशी प्रबन्धानां निर्माणे निपुणस्स्वयम् ।
सुशारीरः प्रगल्भो ऽथ गमके जाड्यवर्जितः ॥ १०५८ ॥

शुद्धवेसरभिन्नादि[1]रागगानविचक्षणः ।
उत्तमोत्तम एवासौ ख्यातो वाग्गेयकारकः ॥ १०५९ ॥

इत्युत्तमोत्तम-वाग्गेयकारलक्षणम् ॥

शुद्धदेशीप्रबन्धानां गानभेदेषु कोविदः ।
विविधालापसंयुक्तो[2] गमकेनविवर्जितः ॥ १०६० ॥

---

1 '(शुद्ध) 'सङ्कीर्णदेश्यादी 'ति हरिपालीयमूलग्रन्थपाठः ।

2 'यो भवेन्मृदुशारीरो ' इति हरिपालीयमूलग्रन्थपाठः ।

स उत्तम इति प्रोक्तो मध्यमो ऽथ समीर्यते ।

इत्युत्तमवाग्गेयकारलक्षणम् ॥

[illegible] शुद्धानां मधुरस्वरः ॥ १०६१ ॥

शुद्धसालगसूडादि[1]प्रबन्धेषु सुशिक्षितः ।
सुशारीरस्तु गमके निष्णातो यः स मध्यमः ॥ १०६२ ॥

इति मध्यमवाग्गेयकारलक्षणम् ॥

देशीप्रबन्धसूडादि निर्माणे दृष्टकौशलः ।
सुशारीरस्सुगमको देशीरागेषु पण्डितः ॥ १०६३ ॥

यश्च स्यादेष[2] रागज्ञैः कनिष्ठ इति कीर्तितः ।

इति कनिष्ठवाग्गेयकारलक्षणम् ॥

तदन्वति कनिष्ठस्य लक्ष्मनिर्णयं[3] कथ्यते ॥ १०६४ ॥

देशीप्रबन्धसूडादिविधानोद्भूतपाटवः ।
जडकुत्सितशारीरस्त्यक्तताररयतिक्रमः ॥ १०६५ ॥

असावतिकनिष्ठस्स्यात्सन्त्यक्तो गमकादिभिः ।

इत्यतिकनिष्ठवाग्गेयकारलक्षणम् ।

इति हरिपालीयोक्तानि वाग्गेयकारलक्षणानि निरूपितानि ॥

---

1 'देशीप्रबन्ध' इति हरिपालीयमूलग्रन्थपाठः ।

2 'वर्णाश्रयेति' ति हरिपालीयमूलग्रन्थपाठः ।

3 'निर्णीयतेऽधुने' ति हरिपालीयमूलग्रन्थपाठस्साधुः ।

अथ तदुक्तं वाग्गेयकारविशेषलक्षणं निरूप्यते :—

श्रुतिस्वरविशेषज्ञो रागरागाङ्गकोविदः ॥ १०६६ ॥

सप्तगीतिप्रबन्धज्ञः सर्वभाषाविशेषवित् ।
[चतुरस्तालभेदेषु सर्वपादप्रयोगवित् ॥ १०६७ ॥

समस्तनृत्तनिर्माणो रसेषु रसिकः स्वयम् ।
वर्णालङ्कारनिष्णातः प्राज्ञो गमकसप्तके ॥ १०६८ ॥

उपमाभापश्लेषार्थकवितोपहीनश्रमः ।
प्रारब्धार्थस्य निर्माणस्थानास्थानविभागवित् ][1] ॥ १०६९ ॥

जितश्रमकरद्वन्द्वः प्रसन्नो मधुरस्वरः ।
मन्द्रमध्यमतारेषु वैदग्ध्यं दर्शयन् स्वयम् ॥ १०७० ॥

त्रिस्थानगमकोपेतः कुलीनश्शुचिरुज्वलः ।
अनाहतमतिः प्राज्ञः स्वपक्षप्रतिपादकः ॥ १०७१ ॥

परपक्षविभेत्ता च सभाशूरो निराकुलः ।
रञ्जको ललिताकारः पञ्चवृत्तिषु वर्तकः ॥ १०७२ ॥

रत्नानामिव कौस्तुभः सुरगिरिः क्षीणीधराणामिव ? ।
क्षीराम्भोधिरुदन्वतामिव शुनासीरः सुराणामिव ॥ १०७३ ॥

शेषस्स्यात्फणिनामिवाभ्रमुपरिस्तम्बेरमाणामिव ।
प्रख्यातो भुवनेषु गीतिविदुषां वाग्गेयकारो भवेत् ॥ १०७४ ॥

---

[1] इदं सार्धश्लोकद्वयं ग्रन्थकृता नोद्धृतम् ।

उत्तमोत्तम इत्युक्तो गुणैरेवंविधैर्युतः ।
उत्तमः पञ्चमैर्युक्तो गुणैरेतादृशो भवेत् ॥ १०७५ ॥

स्यादर्धगुणसंयुक्तो मध्यमः परिकीर्तितः ।
अर्धार्धगुणयुक्तोऽसौ कनिष्ठ इति विश्रुतः ॥ १०७६ ॥

द्वित्रैरतिकनिष्ठोऽथ गुणैर्युक्त इतीर्यते ।

इति हरिपालीयोक्तं वाग्गेयकारविशेषलक्षणं निरूपितम् ॥

अथ रत्नाकरोक्तानि गायकलक्षणानि कथ्यन्ते :

मार्गं देशीञ्च यो वेत्ति स गान्धर्वोऽभिधीयते ॥ १०७७ ॥

इति गान्धर्वः ॥

यो वेत्ति केवलं मार्गं स्वरादिः स निगद्यते ।

इति स्वरादिः ॥

हृद्यशब्दस्सुशारीरो ग्रहमोक्षविचक्षणः ॥ १०७८ ॥

रागरागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गकोविदः ।
प्रबन्धगाननिष्णातो विविधालप्तितत्त्ववित् ॥ १०७९ ॥

सर्वस्थानोत्थगमकेष्वनायासलसद्गतिः ।
आयत्तकण्ठस्तालज्ञः सावधानो जितश्रमः ॥ १०८० ॥

शुद्धच्छायालगाभिज्ञः सर्वकाकुविशेषवित् ।
अनेकस्थायि[1]सञ्चारः सर्वदोषविवर्जितः ॥ १०८१ ॥

क्रियाप्रयोजक[2]लयः सुघटो धारणान्वितः ।
स्फूर्जन्निर्जवनो हारिरहः कुद्धजनोद्धुरः ॥ १०८२ ॥

सुसम्प्रदायो गीतज्ञैर्गीयते गायनाग्रणीः ।

## हरिपालीये

ज्ञाता भरतशास्त्रे यो[3] गानविद्याविशेषवित् ॥ १०८३ ॥

त्यक्त[4]लक्ष्यपरिज्ञानः केवलं लक्षणान्वितः ।
वेत्तिस्वराणामौदार्यं सस्वरादिरिहोच्यते ॥ १०८४ ॥

इति स्वरादिः ॥

## तन्मते

आलप्तिगायनस्यादौ स्वरूपन्तु निरूप्यते ।
तारेष्वधिकशारीरः समतारैकरञ्जकः ॥ १०८५ ॥

रञ्जको गमकस्थास्मिन् रसिको भावनापरः ।
अनिबद्धनिबद्धानामालप्तौ चतुरः परः ॥ १०८६ ॥

---

1 'स्थाय' इति रत्नाकरमूलग्रन्थपाठः ।

2 'क्रियापरोयुक्त' इति रत्नाकरमूलग्रन्थपाठः ।

3 'भरतमार्गस्य' इति हरिपालीयमूलग्रन्थपाठः ।

4 'न्यस्त' इति हरिपालीयमूलग्रन्थपाठः ।

निबद्धानाञ्च मुख्यानां ज्ञातॄणामपि रञ्जकः ।
प्रारम्भगातिनिर्वाहप्रवीणस्सस्वरः क्रमात् ॥ १०८७ ॥

गतेरुपायनिर्माता स्वरसञ्चारकोविदः ।
दर्शयन् बहुशस्साम्यवर्णालङ्कारमूर्छनाः ॥ १०८८ ॥

रागरागाङ्गतत्त्वज्ञो ह्युक्तोयं गायकोत्तमः ।

इत्युत्तमगायकः ॥

रत्नाकरे

गुणैः कतिपयैर्हीनो निर्दोषो मध्यमो मतः ॥ १०८९ ॥

हरिपालीये

पूर्णस्थानद्वयालप्तिः गानदर्शनकोविदः[1] ।
एवंविधगुणैर्युक्तो मध्यमः परिकीर्तितः ॥ १०९० ॥

इति मध्यमगायकलक्षणम् ॥

[रत्नाकरे

महामाहेश्वरेणोक्तः स दोषो गायनो ऽधमः ।

हरिपालीये

गुणैः कतिपयैरेष(?र्हीनो) भवेदधमगायकः ][2] ॥ १०९१ ॥

इत्युत्तममध्यमाधमगायकलक्षणम् ॥

---

1 'गाननिर्मापणे पटु 'रिति हरिपालीयमूलग्रन्थपाठः ।

2 इदमधमगायकलक्षणं ग्रन्थकृता नोद्धृतम् ।

अथ रत्नाकरोक्तं पञ्चविधगायकलक्षणं कथ्यते :—

शिक्षाकारो ऽनुकारश्च रसिको रञ्जकस्तथा ।
भावुकश्चेति गीतिज्ञः पञ्चधा गायनं जगुः ॥ १०९२ ॥

अन्यूनशिक्षणे दक्षः शिक्षाकारो मतः सताम् ।
अनुकार इति प्रोक्तः परभङ्ग्यनुकारकः ॥ १०९३ ॥

रसाविष्टस्तु रसिको रञ्जकः श्रोतृरञ्जकः ।
गीतस्यातिशयाधानाद्भावुकः परिकीर्तितः ॥ १०९४ ॥

एकलो यमलो बृन्दगायनश्चेति(ते?) स त्रिधा ।
एक एव तु यो गायेदसावेकलगायनः ॥ १०९५ ॥

सद्वितीयो यमलकः सबृन्दो बृन्दगायनः ।

इति रत्नाकरोक्तं पञ्चविधगायकलक्षणं, त्रिविधमन्यच्च ॥

हरिपालीये

शिक्षयते प्रक्रियां यो गीतं शीघ्रं स सुशिक्षितः ॥ १०९६ ॥

त्रिविधोऽसौ परिज्ञेयो गुणैर्भेदेन कल्पितः ।
शिक्षाकारो रञ्जकश्च रसिकस्तदनन्तरम् ॥ १०९७ ॥

आकर्णितस्यगीतस्य शिक्षायां सहसा पटुः ।
विषमं प्राञ्जलं वापि गीतमालप्तिसंज्ञितम् ॥ १०९८ ॥

गायन् समस्तदेश्यानां रचनाबन्धकारकृत् ।
शिक्षाकारो भवेदेष रञ्जकः कथ्यते ततः ॥ १०९९ ॥

नीरसंस्वरसङ्कुर्वन् गीतैस्सर्वमनोहरैः ।
शीघ्रशिक्षापटीयान् यः स रञ्जक इति स्मृतः ॥ ११०० ॥

स्वयं रोमाञ्चितो गीते श्रोतॄन् लक्ष्यन्पुनः[1] ।
विदग्धः प्राञ्जले गीते शिक्षाकाले जडात्मकः ॥ ११०१ ॥

रसिकस्स्यात्स्वरूपन्तु शिक्षाकारस्य लक्षणात् ।

इति हरिपालीयोक्तं त्रिविधगायकलक्षणम् ॥

रत्नाकरे

रूपयौवनशालिन्यो गायन्यो गातृवन्मताः ॥ ११०२ ॥

माधुर्यधुर्यध्वनयः चतुराश्चतुरप्रियाः ।

इति गायिनीलक्षणम् ॥

अथ रत्नाकरोक्ताः गायनदोषाः कथ्यन्ते :—

सन्दष्टोद्घुष्टसूत्कारीभीतशङ्कितकम्पिताः ॥ ११०३ ॥

कराली कपिलः[2] काकी वितालकरभोद्भटाः ।
झोम्बकस्तुम्बकी वक्री प्रसारी विनिमीलकः ॥ ११०४ ॥

विरसापस्वराव्यक्तस्थानभ्रष्टाव्यवस्थिताः ।
मिश्रको ऽनवधानश्च तथान्यः सानुनासिकः ॥ ११०५ ॥

---

1 'श्रोतॄन्पुलककृत्पुनः' इति हरिपालीयमूलग्रन्थपाठस्समीचीनः ।

2 निन्दितगायकभेदोऽयं रत्नाकरमूलग्रन्थे 'कपिलः' इत्यभिहितः ।

पञ्चविंशतिरित्येते गायका निन्दिता मताः ।

## एतेषां लक्षणानि यथा —

सन्दश्य दशनान्गायन्सन्दष्टः परिकीर्तितः ॥ ११०६ ॥

उद्घुष्टो विरसोद्घोषः सूत्कारी सूत्कृतैर्मुहुः ।
भीतो भयान्वितो गायन् त्वरया शङ्कितो मतः ॥ ११०७ ॥

कम्पितः कम्पनाद्वेयः स्वभावाद्गात्रशब्दयोः ।
कराली गदितः सद्भिः करालोद्घाटिताननः ॥ ११०८ ॥

कपिलः स तु यो गायेत्स्वरान्न्यूनाधिकश्रुतीन् ।
काककूररवः काकी वितालस्तालविच्युतः ॥ ११०९ ॥

दधानः कन्धरामूर्ध्वां करभो ऽभिहितो बुधैः ।
छागवद्भदनीं कुर्वनुद्भटो ऽधमगायकः ॥ १११० ॥

शिरालफालवदनग्रीवो गाता तु झोम्बकः ।
तुम्बकी तुम्बकाकारोत्फुल्लगल्लस्तु गायनः ॥ ११११ ॥

वक्री वक्रीकृतगलो गायन्धीरैरुदाहृतः ।
प्रसारी गीयते तज्ज्ञैर्गात्रगीतप्रसारणात् ॥ १११२ ॥

निमीलको मतो गायन्निमीलितविलोचनः ।
विरसो नीरसो वर्ज्यस्वरगानादपस्वरः ॥ १११३ ॥

गद्गदध्वनिरव्यक्तवर्णस्त्वव्यक्त उच्यते ।
स्थानभ्रष्टः स यः प्राप्तुमशक्तः स्थानकत्रयम् ॥ १११४ ॥

अव्यवस्थित इत्युक्तः स्थानकैरव्यवस्थितैः ।
शुद्धच्छायालगौ रागौ मिश्रयन्मिश्रकः स्मृतः ॥ १११५ ॥

इतरेषाञ्च रागाणां मिश्रको भूरिमिश्रणात् ।
स्थायादिष्ववधानेन निर्मुक्तो ऽनवधानकः ॥ १११६ ॥

गेयं नासिकया गायन्गीयते सानुनासिकः ।

इति रत्नाकरोक्ताः गायनदोषाः ॥

हरिपालीये

अतः परं तु दोषाणां स्वरूपमभिधीयते ॥ १११७ ॥

[सन्दंशनामकः कश्चिदपरो ह्यनुनासिकः ।
काकस्वरः करालश्च वक्रीति विनिमीलकः ॥ १११८ ॥

अजाख्यः फुल्लगल्लश्चेत्यष्टौ च परिकीर्तिताः ।
दम्भसन्दंशनं कुर्वन्गीता सन्दंशनामकः ][1] ॥ १११९ ॥

यो गीतं नासया गायेत्सो ऽनुनासिक इष्यते ।
न्यूनाधिकस्वरं गायन्कुरुते भयसंयुतः ॥ ११२० ॥

काकवद्गायते यस्तु स हि काकस्वरः स्मृतः ।
क्षोभस्सूत्कारसंयुक्त अस्थाननियमाश्रितः ॥ ११२१ ॥

---

1 इदं श्लोकद्वयं ग्रन्थकृता नोद्धृतम् ।

गाता तु वदनोद्भूता[1] शिरालो झोम्बकाभिधः ।
वक्री कुट्टामितश्रितो[2] योजयेद्गायकाधमः ॥ ११२२ ॥

अतिप्रसारसहितः स वक्रीसंज्ञकस्ततः ।
असौ विचलयन्गाता सर्वदा गीयते ऽधमः[3] ॥ ११२३ ॥

अवधारेण(?नेन) रहितं वितालं गमकान्वितम् ।[4]
अनुसञ्चलनोपेतः झोम्बको स क्रियास्पदम् ॥ ११२४ ॥

छागवद्वहनीं कुर्वन्नजोऽसावभिधीयते ।

अथ रत्नाकरोक्ताः गायकशब्दचतुर्भेदाः कथ्यन्ते :—

चतुर्भेदो भवेच्छब्दः खाहुलो नारहाटकः ॥ ११२५ ॥

बोम्बको मिश्रकश्चेति तल्लक्षणमिहोच्यते ।
कफजः खाहुलः स्निग्धो मधुरो सौकुमार्ययुक् ॥ ११२६ ॥

आडिल्ल एष एव स्यात्प्रौढश्चेन्मन्द्रमध्ययोः ।
त्रिस्थानघनगम्भीरलीनः पित्तोद्भवो ध्वनिः ॥ ११२७ ॥

नाराटो बोम्बकस्तु स्यादन्तर्निस्सारतायुतः ।
परुषोच्चैस्तरः स्थूलो वातजश्शार्ङ्गिणोदितः ॥ ११२८ ॥

---

1 'गाता वदनमुद्घाट्य' इति पाठः साधीयानिति भाति ।

2 'वक्रीकृत्य निजग्रीवा' मिति हरिपालीयमूलग्रन्थपाठस्समीचीनः ।

3 'मीलिताक्षो निमीलकः' इति हरिपालीयमूलग्रन्थपाठस्समीचीनः ।

4 ग्रन्थकृता नोद्धृतः ।

एतत्सम्मिश्रणादुक्तो मिश्रकः सन्निपातकः ।

एतच्छब्दस्य शङ्कापरिहारभेदप्रपञ्चो रत्नाकर एव द्रष्टव्यः ॥

हरिपालीये

खाहुलो बोम्बलश्चैव नाराटस्त्वथ मिश्रकः ॥ ११२९ ॥

उद्दिष्टानां गुणानान्तु लक्षणं प्रतिपाद्यते ।
त्रिस्थानगमकप्रौढः[1] कम्पभीतिविवर्जितः ॥ ११३० ॥

निषिञ्चन् कर्णरन्ध्रेषु माधुर्यं खाहुलो भवेत् ।
गम्भीरः प्रबलस्तारे किञ्चिद्रङ्ग(?)विवर्जितः ॥ ११३१ ॥

दूरश्राव्यश्रुतिरसौ बोम्बलस्सुधमीरितः ।
स्थानत्रयञ्च संस्पर्शे बहुरङ्गो मनोहरः (?) ॥ ११३२ ॥

योषित्स्वरानुकारी च नाराट इति कथ्यते ।
[अनुतारो जलगतिर्गम्भीरो बहुरञ्जकः ॥ ११३३ ॥

श्राव्यो मिश्राकृतिर्मिश्र इत्यसावुत्तमोत्तमः ।][2]

इति हरिपालीयोक्ताः गायकशब्दगुणाः ॥

अथ रत्नाकरोक्ताः शब्दगुणाः कथ्यन्ते :—

मृष्टो मधुरचेहालत्रिस्थानकसुखावहाः ॥ ११३४ ॥

---

1 'त्रिस्थानपूर्णपटु' रिति हरिपालीयमूलग्रन्थपाठः ।

2 श्लोकोऽयं मातृकायां पतितः ।

प्रचुरः कोमलो गाढः श्रावकः करुणो घनः ।
स्निग्धः श्लक्ष्णो रक्तियुक्तश्छविमानिति सूरिभिः ॥ ११३५ ॥

गुणैरेभिः पञ्चदशभेदः शब्दो निगद्यते ।
श्रोत्रनिर्वापको मृष्टस्त्रिषु स्थानेषुविस्तरः[1] ॥ ११३६ ॥

मधुरः कीर्तितस्तारे[2] प्रौढो मधुररञ्जकः ।
नातिस्थूलो नातिकृशः स्निग्धश्चेहालको घनः ॥ ११३७ ॥

आकण्ठकुण्ठनं स स्यात्पुंसां स्त्रीणान्तु सर्वदा ।
त्रिषु स्थानेष्वेकरूपश्छविरक्त्यादिभिर्गुणैः ॥ ११३८ ॥

त्रिस्थानो मनसो यस्तु सुखदः स सुखावहः ।
श्रीशङ्करप्रियेणोक्तः प्रचुरस्थूलतायुतः ॥ ११३९ ॥

कोमलो ऽन्वर्थनामैव कोकिलध्वनिवन्मतः ।
गाढस्तु प्रबलो दूरश्रवणाच्छ्रावकोमतः ॥ ११४० ॥

करुणः श्रोतृचित्तस्य करुणारसदीपकः ।
दूरश्रवणयोग्यस्तु घनो ऽन्तःसारतायुतः ॥ ११४१ ॥

अरूक्षो दूरसंश्राव्यो बुधैः स्निग्धो ध्वनिः स्मृतः ।
श्लक्ष्णस्तु तैलधारावदच्छिद्रो धीरसम्मतः ॥ ११४२ ॥

---

1 'स्थानेष्वविस्तरः' इति रत्नाकरमूलग्रन्थपाठः ।

2 'कीर्तितस्तारः' इत्यपि सुधाकरमाश्रित्य पाठो वर्तते ।

अनुरक्तेस्तु जनको रक्तिमानभिधीयते ।
गातु[1]र्विमलकण्ठत्वाद् यः प्राज्ञैरुपलक्ष्यते ॥ ११४३ ॥

उज्ज्वलो ऽयमिति प्रोक्तश्छविमानिति स ध्वनिः ।

इति शब्दगुणाः ॥

अथ शब्ददोषाः निरूप्यन्ते :—

रूक्षस्फुटितनिःसारकाकोलीकेटिकेणयः ॥ ११४४ ॥

कृशो भग्न इति प्रोक्ताः दुष्टस्याष्टौ भिदा ध्वनेः ।
रूक्षः स्निग्धत्वनिर्मुक्तः स्फुटितो ऽन्वर्थनामकः ॥ ११४५ ॥

एरण्डकाण्डनिःसारो निःसार इति कीर्तितः ।
काकोलिकाख्यः काकोलकुलनिर्घोषनिष्ठुरः ॥ ११४६ ॥

स्थानत्रयप्राप्तियुक्तो निर्गुणः केटिरुच्यते ।
कृच्छ्रोन्मीलन्मन्द्रतारः कोपीरित्यभिधीयते ॥ ११४७ ॥

अतिसूक्ष्मः कृशो भग्नः खरोष्ट्रध्वनिनीरसः ।

इति रत्नाकरोक्ताः शब्ददोषाः ॥

अथैतदुक्तं शारीरलक्षणम् :—

रागाभिव्यक्तिशक्तत्वमनभ्यासेऽपि यद्ध्वनेः ॥ ११४८ ॥

---

1 'धातु'रिति रत्नाकरमूलग्रन्थपाठः ।

तच्छारीरमिति प्रोक्तं शरीरेण सहोद्भवात् ।
तारानुध्वनिमाधुर्यैरक्तिगाम्भीर्यमार्दवैः ॥ ११४९ ॥

घनतास्निग्धताकान्तिप्राचुर्यादिगुणैर्युतम् ।
तत्सुशारीरमित्युक्तं लक्ष्यलक्षणकोविदैः ॥ ११५० ॥

अनुध्वान[1]विहीनत्वं रूक्षत्वं त्यक्तरक्तिता ।
निःसारता विस्वरता काकित्वं स्थानविच्युतिः ॥ ११५१ ॥

कार्श्यं कार्कश्यमित्याद्यैः कुशारीरन्तु दूषणैः ।
विद्यादानेन तपसा भक्त्या वा पार्वतीपतेः ॥ ११५२ ॥

प्रभूतभाग्यविभवैः सुशारीरमवाप्यते ।

## हरिपालीये

अनुतारोज्ज्वलगतिः गम्भीरो बहुरञ्जितः[2] ॥ ११५३ ॥

श्राव्यो मिश्रकृतिर्मिश्र इत्यसावुत्तमो भवेत् ।

## इति शारीरलक्षणम् ॥

## अथ रत्नाकरोक्तगमकलक्षणं लक्ष्यते :—

स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः ॥ ११५४ ॥

---

1 'अनुस्वान' इति रत्नाकरमूलग्रन्थपाठस्समीचीनः ।

2 'रञ्जकः' इति हरिपालीयमूलग्रन्थपाठः ।

तस्य भेदास्तु तिरिपः स्फुरितः कम्पितस्तथा ।
लीन आन्दोलितवलित्रिभिन्नकुरुलाहताः ॥ ११५५ ॥

उल्लासितः प्लावितश्च हुम्फितो मुद्रितस्तथा ।
नामितो मिश्रितः पञ्चदशेति परिकीर्तिताः ॥ ११५६ ॥

इत्युद्देशः ॥

लक्षणानि यथा—

लघिष्ठडमरुध्वानकम्पानुकृतिसुन्दरः ।
द्रुततुर्यांशवेगेन तिरिपः परिकीर्तितः ॥ ११५७ ॥

वेगे द्रुततृतीयांशसम्मिते स्फुरितो मतः ।
द्रुतार्धमानवेगेन कम्पितं गमकं विदुः ॥ ११५८ ॥

लीनस्तु द्रुतवेगेनान्दोलितो लघुवेगतः ।
वलिर्विविधवक्रत्वयुक्तवेगवशाद्भवेत् ॥ ११५९ ॥

त्रिभिन्नस्तु त्रिषुस्थानेष्वविश्रान्तघनस्वरः ।
कुरुलो वलिरेव स्याद्ग्रन्थिलः कुशकाकुलः[1] ॥ ११६० ॥

स्वरमध्याग्रमाहत्य[2] निवृत्तस्त्वाहतो मतः ।
उल्लासितः स तु प्रोक्तो यः स्वरानुत्तरोत्तरान् ॥ ११६१ ॥

---

1 'कण्ठ्यकोमलः' इति रत्नाकरमूलग्रन्थपाठः ।

2 मातृकायां 'मध्यग्रामाग्रमाहत्य' इति दुष्टपाठो वर्तते । 'स्वरमग्रिमभाहत्य' इति रत्नाकरमूलग्रन्थपाठः ।

क्रमाद्गच्छेत्प्लावितस्तु प्लुतमानेन कम्पनम् ।
हृदयङ्गमहुङ्कारगम्भीरो हुम्फितो[1] भवेत् ॥ ११६२ ॥

मुखमुद्रणसम्भूतो मुद्रितो गमको मतः ।
स्वराणां नमनादुक्तो नामितो ध्वनिवेदिभिः ॥ ११६३ ॥

एतेषां मिश्रणान्मिश्रस्तस्य स्युर्भूरयो भिदाः ।
तेषान्तु स्थायवागेषु विवृतिः संविधास्यते ॥ ११६४ ॥

## इति रत्नाकरोक्तं पञ्चदशविधगमकलक्षणम् ॥

### हरिपालीये

कम्पितः स्फुरितो लीनः त्रिभिन्नस्तिरिपस्तथा ।
आन्दोलिताहतावेवं गमकास्सप्तकीर्तिताः ॥ ११६५ ॥

इत्युद्देशः ॥

### गमकसामान्यलक्षणं लक्ष्यते :—

स्वश्रुतिस्थानसम्भूतः छन्दः[2] श्रुत्यन्तराश्रयः ।
स्वरो यो गमयेद् गीते गमको ऽसौ निरूपितः ॥ ११६६ ॥

### लक्षणानि यथा—

द्रुतत्रिगुणमानेन यत्र स्यात्स्वरकल्पनम्[3] ।
कम्पितं नाम गमकमाहुर्गमककोविदाः ॥ ११६७ ॥

---

1 'गुम्फित' इति रत्नाकरमूलग्रन्थे नामान्तरम् । 'हुम्फित' इत्येव पाठः सिंहभूपालीयव्याख्यायां स्वीकृतः ।

2 'छाये'ति हरिपालीयमूलग्रन्थपाठः ।

3 'कम्पन'मिति हरिपालीयमूलग्रन्थपाठः ।

द्रुतद्विगुणवेगेन विद्युत्स्फुरणसन्निभः ।
गमकः स्फुरितो ज्ञेयः अभ्यद्गायकोत्तमैः[1] ॥ ११६८ ॥

मसृणो द्रुतमानेन स्वरो यत्र विधीयते ।
लीनाभिधानो गमको गायकैरुत्तमैः स्मृतः ॥ ११६९ ॥

स्थानकत्रयसंस्पर्शो त्यक्तस्वेदो[2] घनस्वरः ।
त्रिभिन्ननामको ऽसौ स्याद्गमको हृदयङ्गमः ॥ ११७० ॥

ध्वनिर्डमरुकस्यैव तयोरास्फालने द्रुतम्[3] ।
यादृकूतदनुसारी स्याद्गमकस्तिरिपो विदुः ॥ ११७१ ॥

(ता?) स्वरस्य लघुमानेन यस्मिन्नान्दोलनं भवेत् ।
आन्दोलिताभिधेयो ऽसौ गमको लक्षितः स्फुटम् ॥ ११७२ ॥

अग्रगं स्वरमाहत्य स्वरो यत्र निगद्यते ।
आहताख्यः स गमको गायकानां प्रमोदनः ॥ ११७३ ॥

## इति हरिपालीयोक्तानि सप्तगमकलक्षणानि ॥

## रत्नाकरे

रागस्यावयवः स्थायो वागो गमक उच्यते ।

---

1 'अभ्यस्तो गायकोत्तमै'रिति पाठस्सामञ्जस्यमावहति ॥

2 'त्यक्तवेग' इति पाठस्साधुरिति भाति ।

3 'घोटस्फोट उदाहृत' मिति हरिपालीयमूलग्रन्थपाठस्समीचीनः ।

तत्स्थायलक्षणोद्देशप्रपञ्चो रत्नाकर एव द्रष्टव्यः ॥

तदुक्तमालप्तिलक्षणं कथ्यते :—

रागालपनमालप्तिः प्रकटीकरणं मतम् ॥ ११७४ ॥

द्विधा सा गदिता रागरूपकाभ्यां विशेषणात् ।
रागालप्तिश्च सा या स्यादनपेक्ष्यैव रूपकम् ॥ ११७५ ॥

स्वस्थानैः सा चतुर्भिः स्यादिति गीतविदो विदुः ।
यत्रोपवेश्यते रागः स्वरे स्थायी स कथ्यते ॥ ११७६ ॥

ततश्चतुर्थो द्व्यर्धः स्यात्स्वरे तस्मादधस्तने ।
चालनं मुखचालः स्यात्स्वस्थानं प्रथमन्तु तत् ॥ ११७७ ॥

द्व्यर्धस्वरे चालयित्वा न्यसनं तद्द्वितीयकम् ।
स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ॥ ११७८ ॥

द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताः स्वराः ।
अर्धस्थिते चालयित्वा न्यसनन्तु तृतीयकम् ॥ ११७९ ॥

द्विगुणे चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ।
एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ॥ ११८० ॥

इति रागालप्तिः ॥

स्तोकस्तोकैस्ततः स्थायैः प्रसन्नैर्बहुभङ्गिभिः ।
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥ ११८१ ॥

रूपकस्थेन रागेण तालेन च विधीयते ।
या प्रोक्ता रूपकालप्तिः सा पुनर्द्विधा भवेत् ॥ ११८२ ॥

प्रतिग्रहणिकैकान्या भञ्जनीत्यभिधीयते ।
विधाय स्थायमालप्ते रूपकावयवो यदि ॥ ११८३ ॥

प्रतिगृह्येति सा प्रोक्ता प्रतिग्रहणिका बुधैः ।
भञ्जनी द्विविधा ज्ञेया स्थायरूपकभञ्जनात् ॥ १३८४ ॥

यदा तत्पदमानेन स्थायो रूपकसंस्थितः ।
नानाप्रकारः क्रियते सा ज्ञेया स्थायभञ्जनी ॥ ११८५ ॥

तैः पदैस्तेन मानेन समग्रं रूपकं यदि ।
अन्यथा वान्यथा गायेदसौ रूपकभञ्जनी ॥ ११८६ ॥

इति रूपकालप्तिभेदाः ॥

वर्णालङ्कारसम्पन्ना गमकस्थायचित्रिता ।
आलप्तिरुच्यते तज्ज्ञैर्भूरिभङ्गिमनोहरा ॥ ११८७ ॥

इत्यालप्तिलक्षणम् ॥

अथैतदुक्तं बृन्दलक्षणं कथ्यते :—

गातृवादकसङ्घातो बृन्दमित्यभिधीयते ।
उत्तमं मध्यममथो कनिष्ठमिति तत्त्रिधा ॥ ११८८ ॥

चत्वारो मुख्यगातारो द्विगुणास्समगायनाः ।
गायन्यो द्वादश प्रोक्ता वांशिकानांश्चतुष्टयम् ॥ ११८९ ॥

मार्दङ्गिकास्तु चत्वारो यत्र तद्वृन्दमुत्तमम् ।
मध्यमं स्यात्तदर्धेन कनिष्ठे मुख्यगायनः ॥ ११९० ॥

एकः स्यात्समगातारस्त्रयो गायनिकाः पुनः ।
चतस्रो वांशिकद्वन्द्वं तथा मार्दलिकद्वयम् ॥ ११९१ ॥

उत्तमे गायनीवृन्दे मुख्यगायनिकाद्वयम् ।
दश स्युः समगायन्यो वांशिकद्वितयं तथा ॥ ११९२ ॥

भवेन्मार्दलिकद्वन्द्वं मध्यमे मुख्यगायनी ।
एका स्यात्समगायिन्यश्चतस्रो वांशिकास्तथा ॥ ११९३ ॥

इतो न्यूनन्तु हीनं स्याद्यथेष्टमथवा भवेत् ।
उत्तमाभ्यधिकं वृन्दं कोलाहलमितीरितम् ॥ ११९४ ॥

मुख्यानुवृत्तिर्मिलनन्ताललीनानुवर्तनम् ।
मिथस्त्रुटितनिर्वाहश्चिस्थानव्याप्तिशक्तिता ॥ ११९५ ॥

शब्दसादृश्यमित्येते प्रोक्ता वृन्दस्य षड्गुणाः ।
आह वृन्दविशेषन्तु कुतपं भरतो मुनिः ॥ ११९६ ॥

ततस्य चावनद्धस्य नाट्यस्येति त्रिधा च सः ।
ततस्य कुतपो ज्ञेयो गायनः सपरिग्रहः ॥ ११९७ ॥

वीणा घोषवती चित्रा विपञ्ची परिवादिनी ।
वल्लकी कुब्जिका ज्येष्ठा नकुलोष्ठी च किन्नरी ॥ ११९८ ॥

जया कूर्मी पिनाकी च हस्तिका शततन्त्रिका ।
औदुम्बरी च पट्कर्णा पौणो (पौणा?) रावणहस्तिका ॥ ११९९ ॥

सारङ्ग्यालापिनीत्यादेः ततवाद्यस्य वादकाः ।
वांशिकाः पाविकाः पावाः काहलाः शङ्खवादकाः ॥ १२०० ॥

सर्जरी[1] शृङ्गवाद्याद्यास्तथा तालधाराः पराः ।
कुतपे त्ववनद्धस्य मुख्यो मार्दङ्गिकस्ततः ॥ १२०१ ॥

पणवो दर्दुरो ढक्का मण्डिढक्का च ढक्कली ।
पटहः करटा ढक्का ढवसो घडसस्तथा ॥ १२०२ ॥

हुडुक्का डमरू रुञ्जा कुडुक्का कुडुवा तथा ।
निस्साणस्त्रिवली भेरी तम्बकी बोण्टडी[2] तथा ॥ १२०३ ॥

पट्टवाद्यं घटः[3] कम्रा चावजावज्रसेलुकाः[4] ।
जयघण्टा कांस्यतालो घण्टा च किरिघट्टकम् ॥ १२०४ ॥

वाद्यानामेवमादीनां पृथग्वादकसञ्चयः ।
वराटलाटकर्णाटगौडगूर्जरकोङ्कणैः ॥ १२०५ ॥

महाराष्ट्रान्ध्रहम्मीरचोलैर्मलयमालवैः ।
अङ्गवङ्गकलिङ्गाद्यैर्नानाभिनयकोविदैः ॥ १२०६ ॥

अङ्गहारप्रयोगज्ञैः लास्यताण्डववेदिभिः ।
विचित्रस्थानकप्रौढैर्विषमेषु सुशिक्षितैः ॥ १२०७ ॥

---

1 ‘ मुहुरी ’ इति रत्नाकरमूलग्रन्थपाठः ।
2 ‘ बोम्बडी ’ इति रत्नाकरमूलग्रन्थपाठः ।
3 ‘ पटः ’ इति तत्रैव ।
4 ‘ झल्लरीभाणशेल्लुकाः ’ इति मूलग्रन्थपाठान्तरम् ।

नाट्यस्य कुतपः पात्रैरुत्तमधममध्यमैः ।
कुतपानाममीषान्तु समूहो बृन्दमुच्यते ॥ १२०८ ॥

इति रत्नाकरोक्तं बृन्दलक्षणम् ॥

**अथ क्रमप्राप्तं रत्नाकरोक्तप्रबन्धलक्षणं वक्तुकामेन मुम्मडीचिक्कभूपालेन प्रथमं तावद्गीतलक्षणं लक्ष्यते :—**

रञ्जकः स्वरसन्दर्भो गीतमित्यभिधीयते ।
गान्धर्वं गानमित्यस्य भेदद्वयमुदीरितम् ॥ १२०९ ॥

अनादिसंप्रदायं यद्गन्धर्वैः संप्रयुज्यते ।
नियतं श्रेयसो हेतुस्तद्गान्धर्वं जगुर्बुधाः ॥ १२१० ॥

इति गान्धर्वम् ॥

यत्तु वाग्गेयकारेण रचितं लक्षणान्वितम् ।
देशीरागादिभिः प्रोक्तं (तद्गानं जनरञ्जनम्)[1] ॥ १२११ ॥

अत्र गान्धर्वमुक्तं प्रागधुना गानमुच्यते ।
निबद्धमनिबद्धञ्च तद्द्विधा गदितं बुधैः ॥ १२१२ ॥

बद्धं धातुभिरङ्गैश्च निबद्धमभिधीयते ।
आलप्तिर्बन्धहीनत्वादनिबद्धमितीरितम् ॥ १२१३ ॥

---

[1] अयमंशः मातृकायां नष्टः ।

सा चास्माभिः पुरा प्रोक्ता निबद्धं त्वधुनोच्यते ।
संज्ञात्रयं निबद्धस्य प्रबन्धो वस्तु रूपकम् ॥ १२१४ ॥

प्रबन्धावयवो धातुः स चतुर्धा निरूपितः ।
उद्ग्राहः प्रथमस्तत्र ततो मेलापकध्रुवौ ॥ १२१५ ॥

आभोगश्चेति तेषान्तु क्रमाल्लक्ष्माभिदध्महे ।
उद्ग्राहः प्रथमस्तत्र[1] ततो मेलापकः स्मृतः ॥ १२१६ ॥

ध्रुवत्वात्स्याद् ध्रुवः पश्चादाभोगस्त्वन्तिमो मतः ।
ध्रुवाभोगान्तरे जातो धातुरन्यो ऽन्तराभिधः ॥ १२१७ ॥

स तु सालगसूडस्थरूपकेष्वेव दृश्यते ।
वातपित्तकफा देहधारणाद्धातवो यथा ॥ १२१८ ॥

एवमेते प्रबन्धस्य धातवो देहधारणात् ।
तत्र मेलापकाभोगौ न भवेतां क्वचित्क्वचित् ॥ १२१९ ॥

स द्विधातुस्त्रिधातुश्च चतुर्धातुरिति त्रिधा
प्रबन्धाङ्गानि षट् तस्य स्वरश्च बिरुदं पदम् ॥ १२२० ॥

तेनकः पाटतालौ च प्रबन्धपुरुषस्य तु ।
भवन्त्यङ्गवदङ्गानि मङ्गलार्थप्रकाशके ॥ १२२१ ॥

तत्र तेनपदे नेत्रे स्तः पाटबिरुदे करौ ।
कराभ्यामुद्भवात्कार्ये कारणत्वोपचारतः ॥ १२२२ ॥

---

[1] 'प्रथमो भाग' इति च रत्नाकरमूलग्रन्थपाठः स्पष्टार्थयुक्तः ।

प्रबन्धगतिहेतुत्वात्पाटौ तालस्वरौ मतौ ।
स्वराः षड्जादयस्तेषां वाचकास्सरिगादयः ॥ १२२३ ॥

[तालाभिर्विनिबद्धं यत्तन्निबद्धमितीरितम् ।[1]]
स्वराभिव्यक्तिसंयुक्ताः स्वरशब्देन कीर्तिताः ॥ १२२४ ॥

बिरुदं गुणनाम स्यात्ततो ऽन्यद्वाचकं पदम् ।
तेनेतिशब्दस्तेनः स्यान्मङ्गलस्य प्रकाशकः ॥ १२२५ ॥

ओं तत्सदिति निर्देशस्तत्त्वमस्यादिवाक्यतः ।
तदिति ब्रह्म तेनायं ब्रह्मणा मङ्गलात्मना ॥ १२२६ ॥

लक्षितस्तेन तेनेति प्रासो[2] वाद्याक्षरोपरः ।
तालस्तालप्रकरणे सप्रपञ्चो निरूप्यते ॥ १२२७ ॥

## अथ प्रबन्धजात्युद्देशः ॥

मेदिन्यथो नन्दिनी स्याद्दीपनी बावनी तथा ।
तारावलीति पञ्च स्युः प्रबन्धानान्तु जातयः ॥ १२२८ ॥

अङ्गैः पडादिभिर्द्व्यन्तैः केषाञ्चन मते श्रुति ।

### हरिपालीये

सप्तस्वरमयं गीतं स्वराः स्युस्त्रिविधा अमी ॥ १२२९ ॥

---

1 स्वस्थानभ्रष्टतया निवेशितो ऽयं श्लोकार्धः ।

2 'पाटो' इति रत्नाकरमूलग्रन्थपाठः ।

सचेतनभवाः केचिदचेतनभवाः परे ।
केचिन्मिश्रास्तु विज्ञेयाः क्रमाल्लक्षणमुच्यते ॥ १२३० ॥

सचेतनोद्भवाः ख्याताः शरीरप्रभवास्स्वराः ।
वीणावाद्यसमुद्भूताः स्वरा ज्ञेया अचेतनाः ॥ १२३१ ॥

वंशजा विदिता मिश्रास्तत्र मुख्याः विशेपजाः[1] ।
शरीराज्जायते नादो नादादेव स्वरा इमे ॥ १२३२ ॥

स्वरेभ्यस्सकलेभ्यो ऽपि गीतमेतत्प्रवर्तते ।
निबद्धमनिबद्धञ्च द्विविधं तत्प्रशस्यते ॥ १२३३ ॥

तालादिभिर्निबद्धं यत्तन्निबद्धमितीरितम् ।
यदालप्त्यादिभिर्गीतमानिबद्धं तदुच्यते ॥ १२३४ ॥

प्रबन्धो रूपकं वस्तुर्निबद्धस्य भिधा त्रिधा ।
अङ्गैः षड्भिश्चतुःपड्भिर्धातुभिर्यः[2] प्रबध्यते ॥ १२३५ ॥

स प्रबन्ध इति प्रोक्तो हरिपालमहीभुजा ।
तद्रूपकं मुखं चन्द्र इति यत्र निरूप्यते ॥ १२३६ ॥

तद्वस्तु यत्र चेत्तस्य स्यादुद्ग्राहादि स्वरादि वा ।
उद्ग्राहस्स च यद्गीतमादावुद्गृह्यते बुधैः ॥ १२३७ ॥

---

1 'शरीरजाः' इति हरिपालीयमूलग्रन्थपाठस्समीचीनः ।

2 पाठोऽयं चिन्त्यः ।

मेलापको द्विधैवस्यादुद्ग्राहध्रुवमेलनात् ।
आभोगध्रुवयोश्चैव मेलनादपरो भवेत् ॥ १२३८ ॥

उद्ग्राहाभोगयोरेव चलनं विद्यते मुहुः ।
ध्रुवो निश्चल एवायं अन्तःख्यातो ध्रुवाख्यया ॥ १२३९ ॥

गीयते नायकस्यैव यस्मिन्बिरुदनामनि ।
आभोगः स भवेन्नाम्ना गीतस्यान्ते समीर्यते ॥ १२४० ॥

अर्थस्य यत्र निर्वाहः पदबन्धेन दृश्यते ।
नाम्ना धातुरिति प्रोक्तः स सङ्गीतविशारदैः ॥ १२४१ ॥

द्वाभ्यां त्रिभिश्चतुर्भिर्वा प्रबन्धो धातुभिस्त्रिधा ।
पदं तेनश्च बिरुदं पाटतालस्वरा इति ॥ १२४२ ॥

एतान्यङ्गानि षट् प्राहुः प्रबन्धस्य मनीषिणः ।
यथा नेत्रे करौ पादावेतान्यङ्गानि देहिनाम् ॥ १२४३ ॥

निरूप्यन्ते प्रबन्धस्य तथैवाङ्गान्यमूनि षट् ।
पदं प्रकाशयेदर्थं तेनको मङ्गलं तथा ॥ १२४४ ॥

नेत्रत्वं कारणादस्मादनयोः प्रतिपादितम् ।
जायेते पाटबिरुदे कराभ्यामिति कारणात् ॥ १२४५ ॥

इमावपि करत्वेन प्रबन्धस्य निरूपितौ ।
दृश्यते स्वरतालाभ्यां गतिर्गीतस्य सर्वदा ॥ १२४६ ॥

अनयोः कारणादस्मात्पाटत्वं प्रतिपादितम् ।
त्रिविधं तच्च विज्ञेयं पदमर्थप्रकाशकम् ॥ १२४७ ॥

संस्कृतप्राकृताभ्यांश्च भाषया च विचित्रया ।
तेनतेनेति यः शब्दः सोऽयं मङ्गलवाचकः ॥ १२४८ ॥

विरुदं देशभाषाभिर्द्विषामुद्वेगदं भवेत् ।
स पाटो यश्च शब्दानामुच्चारो वाद्यसङ्गिनाम् ॥ १२४९ ॥

तालः क्रिया च मानश्च स्वराः षड्जादयः स्मृताः ।

इति हरिपालीयोक्तं प्रबन्धावयवादिलक्षणम् ॥

अथ क्रमप्राप्तः रत्नाकरोक्तप्रबन्धोद्देशः कथ्यते :

नीतिः सेना च कविता चम्पूरित्युदितास्तु ताः ॥ १२५० ॥

अनिर्युक्तश्च निर्युक्तः प्रबन्धो द्विविधो मतः ।
छन्दस्तालाद्यनियमादाद्यः स्यान्नियमात्परः ॥ १२५१ ॥

पुनः प्रबन्धास्त्रिविधाः सूडस्था आलिसंश्रयाः ।
विप्रकीर्णाश्च तत्रादौ सूडलक्षणमुच्यते ॥ १२५२ ॥

एलाकरणढेङ्कीभिर्वर्तन्या झोम्पटेन च ।
लम्भरासैकतालीभिरष्टभिः सूड उच्यते ॥ १२५३ ॥

वर्णोवर्णस्वरो गद्यं कैवाडश्चाङ्कचारिणी ।
कन्दस्तुरगलीलाच गजलीला द्विपद्यपि ॥ १२५४ ॥

चक्रवालः क्रौञ्चपदः स्वरार्थो ध्वनिकुट्टनी ।
आर्या गाथा द्विपथकः कलहंसस्तु तोटकम् ॥ १२५५ ॥

वृत्तं घटो मातृकापि तथा रागकदम्बकः ।
पञ्चतालेश्वरस्तालार्णव इत्येषु कश्चन ॥ १२५६ ॥

सूडक्रमस्य मध्ये चेदसावालिक्रमो भवेत् ।
सूडालिक्रमसम्बन्धाद् द्वात्रिंशदिति कीर्तिताः ॥ १२५७ ॥

ततो ऽन्ये विप्रकीर्णास्तान्प्रसिद्धान्कतिचिद्ब्रुवे ।
श्रीभङ्गः[1] श्रीविलासश्च पञ्चभङ्गीगतः परम् ॥ १२५८ ॥

पञ्चाननो मातिलको त्रिपदीच चतुष्पदी ।
षट्पदी वस्तुसंज्ञश्च विजयास्त्रिपथस्तथा ॥ १२५९ ॥

चतुर्मुखः सिंहलीलो हंसलीलो ऽथ मड्डुकः[2] ।
झम्पटः कन्दुकः स्यात्त्रिभङ्गिर्हरविलासकः ॥ १२६० ॥

सुदर्शनः स्वराङ्कः श्रीवर्धनो हर्षवर्धनः ।
मदनश्चच्चरी चर्या बन्धली[3] राहडी तथा ॥ १२६१ ॥

वीरश्रीर्मङ्गलाचारो धवलो मङ्गलस्तथा ।
ओवी लोली ढोल्लरी च दन्ती षट्त्रिंशदित्यमी ॥ १२६२ ॥

---

1 ‘ श्रीरङ्गः ’ इति मूलग्रन्थपाठान्तरम् ।

2 ‘ दण्डकः ’ इति तत्रैव ।

3 ‘ पद्धटी ’ इति रत्नाकरमूलग्रन्थे नामान्तरम् ।

अङ्घ्रौ खण्डद्वयं सानुप्रासमेकेन धातुना ।
ततः प्रयोगस्तदनु पल्लवाख्यं पदत्रयम् ॥ १२६३ ॥

द्वे स्तो विलम्बिते तत्र तृतीयं द्रुतमानतः ।
एवं पादत्रयं गेयमुद्ग्राहे तुल्यधातुकम् ॥ १२६४ ॥

केवलन्तु तृतीयाङ्घ्रौ सम्बोधनपदान्वितः ।
प्रयोगो ऽन्त्यो विधातव्यो न पल्लवपदस्थितिः ॥ १२६५ ॥

अमुं प्रयोगं मेलापं प्राहुः सोमेश्वरादयः ।
स्तुत्यनामाङ्कितो मध्यविलम्बितपदत्रयः ॥ १२६६ ॥

ध्रुवस्ततस्तत्र पूर्वमेकधातुपदद्वयम् ।
भिन्नधातुतृतीयं स्यादाभोगस्तदनन्तरम् ॥ १२६७ ॥

गेयो वाग्गेयकारेण स्वाभिधानविभूषितः ।
पुनर्गीत्वा ध्रुवे त्यागो ग्रहस्तु विपन्नो भवेत् ॥ १२६८ ॥

एलासामान्यलक्ष्मैतत्पूर्वाचार्यैरुदीरितम् ।
मण्डद्वितीयकङ्कालप्रतितालेषु कश्चन ॥ १२६९ ॥

तालो ऽस्यां त्यागसौभाग्यशौर्यधैर्यादिवर्णनम् ।
एलानां बहवस्सन्ति विशेषास्तेषु केचन ॥ १२७० ॥

व्युत्पत्तये निरूप्यन्ते मतङ्गादिमतोदिताः ।
अकारे दैवतं विष्णुरिकारे कुसुमायुधः ॥ १२७१ ॥

लक्ष्मीॐकार एलानामिति वर्णेषु देवताः ।
कामसन्मथवत्कान्तजितमत्तविकारिणः ॥ १२७२ ॥

मान्धातृसुमती शोभि (सुशोभी)[1] एकातानृतौ[2] ।
विचित्रो वासवमृदुसुचित्रा इति षोडश । ॥ १२७३ ॥

नामान्येलापदानां स्युः षोडशानामनुक्रमात् ।
पद्मालया पत्रिणी च रञ्जनी सुमुखी शची ॥ १२७४ ॥

वरेण्या वायुवेगा च वेदिनी मोहिनी जया ।
गौरी ब्राह्मी च मातङ्गी चण्डिका विजया तथा ॥ १२७५ ॥

चामुण्ड्यैलापदेष्वेताः क्रमात् षोडश देवताः ।
समानो मधुरस्सान्द्रः कान्तो दीप्तस्समाहितः ॥ १२७६ ॥

अग्राम्यस्सुकुमारश्च प्रसन्नौजस्विनाविति ।
मान्धात्रादि पदेषु स्युः प्राणा दश दशस्विमे ॥ १२७७ ॥

## एतत्प्राणानां लक्षणान्युच्यन्ते ।

समानो ऽल्पाक्षरध्वानो मधुरः स्वल्पनादया ।
अल्पमूर्छनयायुक्तः सान्द्रस्तु निबिडाक्षरः ॥ १२७८ ॥

अल्पध्वनिस्ताररगतिः कान्तः कान्तध्वनिर्मतः ।
दीप्तस्तु दीप्तनादः स्यात्स्थायिस्थस्तु समाहितः ॥ १२७९ ॥

---

[1] अंशोयं मातृकायां नष्टः ।

[2] 'गीतकोचिता' विति रत्नाकरमूलग्रन्थस्थ पाठ एव समीचीनः ।

अग्राम्यो ऽक्षरनादानामावृत्त्या समुदाहृतः ।
सुकुमारो वर्णनादमूर्छनाकोमलत्वतः ॥ १२८० ॥

प्रसन्नः स्यात्पदस्थानस्वरादीनां प्रसारतः ।[1]
ओजोबहुल ओजस्वीत्येभिः सर्वैर्गुणैर्युतः ॥ १२८१ ॥

एलाः श्रोतुः प्रयोक्तुश्च धर्मकामार्थसिद्धिदाः ।
गणमात्रावर्णदेशविशिष्टास्ताश्चतुर्विधाः ॥ १२८२ ॥

इत्येलायाः दशप्राणस्वरूपमुक्त्वा तदनन्तरं गणादिलक्षणंलक्ष्यते:—

गणस्समूहः स द्वेधा वर्णमात्राविशेषणात् ।
गुरुर्लघुरिति द्वेधा वर्णो ऽनुस्वारसंयुतः ॥ १२८३ ॥

सविसर्गो व्यञ्जनान्तो दीर्घो युक्तपरो गुरुः ।
वा पदान्तलघुर्वक्रो द्विमात्रो मात्रिको लघुः ॥ १२८४ ॥

ऋजुर्लिपौ श्रे ष्के ष्पे च रहोर्योगे स वा लघुः ।
ए ओ इं हिं पदान्ते वा प्राकृते लघवो मताः ॥ १२८५ ॥

पदमध्ये ऽप्यपभ्रंशे हुं हमे ऊं[2]इमित्यमी ।
तत्र वर्णगणो वर्णैस्त्रिभिरष्टविधश्च सः ॥ १२८६ ॥

मस्त्रिगुः पूर्वलो यः स्यान्मध्यलो रो ऽन्तगुस्तु सः ।
तो ऽन्तलो मध्यगो जः स्याद्भादिभिस्त्रिलघुस्तु नः ॥ १२८७ ॥

---

[1] 'प्रसादतः' इति रत्नाकरमूलग्रन्थपाठः।

[2] 'हुं हे ऊए' इति रत्नाकरमूलग्रन्थपाठः।

इत्येषां देवता भूमिजलाग्निमरुतो ऽम्बरं ।
सूर्यचन्द्रसुराधीशाः क्रमात्कुर्युः फलानि ते ॥ १२८८ ॥

श्रीवृद्धिनिधनस्थानभ्रंशनिर्धनतारुजः ।
कीर्तिमायुश्च वर्णस्य श्लोकगीतादियोगतः ॥ १२८९ ॥

सोमो भौमो बुधो जीवः शुक्रः सौरी रविस्तमः ।
क्रमादकचटानान्तपयशानांश्च देवताः ॥ १२९० ॥

वर्गाणां स्युः फलान्येषामायुःकीर्ती असद्यशः ।
सम्पत्सुभगताकीर्तिमान्द्यं मृत्युश्च शून्यता ॥ १२९१ ॥

प्रयोगे श्लोकगीतादौ स्तुत्यस्योक्तानि सूरिभिः ।
मात्रा कला लघुर्लैः स्यात्तद्गणाश्चपचास्तदौ ॥ १२९२ ॥

स्युः पटपञ्च चतुस्त्रिद्विसङ्ख्या मात्रायुताः क्रमात् ।
अनुक्तायास्तु चत्वारो भेदा रतिगणा मताः ॥ १२९३ ॥

किन्तु तत्र लपूर्वा ये तेष्वादावधिको लघुः ।
एवं मध्यागवा भेदा अष्टौ कामगणाः स्मृताः ॥ १२९४ ॥

तद्वद्बाणगणा भेदाः प्रतिष्ठायास्तु षोडश ।
तत्रवर्णगणैर्जाता गणैला परिकीर्तिता ॥ १२९५ ॥

सा भवेत्त्रिविधा शुद्धा सङ्कीर्णा विकृता तथा ।

शुद्धाश्चतुर्विधाश्चेत्यादिना शार्ङ्गदेवेन वर्णितस्य एलाप्रपञ्चस्यातिविस्तरत्वादत्र विस्तरभीत्या मुम्मडिचिक्कभूपालेन, तत्प्रपञ्चस्तत्रैव द्रष्टव्य इत्यस्मिन्ग्रन्थे न लिखितः

अथ क्रमप्राप्तं सूडस्थकरणलक्षणं लक्ष्यते :—

अष्टधा करणं तत्र स्वराद्यं पाटपूर्वकम् ॥ १२९६ ॥

बन्धादिमं पदाद्यञ्च तेनाद्यं बिरुदादिकम् ।
चित्राद्यं मिश्रकरणमित्येषां लक्ष्म कथ्यते ॥ १२९७ ॥

यत्रोद्ग्राहध्रुवौ सान्द्रस्वरबद्धौ पदैः पुनः ।
आभोगस्तस्य नाम स्याद्धातुर्नेत्रोद्ग्रहः पुनः ॥ १२९८ ॥

इष्टस्वरोंऽशो न्यासः स्याद्रासस्तालो द्रुतो लयः ।
करणं स्वरपूर्वं तत्तद्वदन्यान्यपि स्फुटम् ॥ १२९९ ॥

किन्तु तेषां स्वरस्थाने भेदकानि प्रचक्ष्महे ।[1]
स्वरैः सहस्तपाटैस्तु स्यात्पाटकरणं ध्रुवम् ॥ १३०० ॥

क्रमव्यत्यासभेदेन तद्द्विधा परिकीर्तितम् ।
स्वरैर्मुरजपाटैर्यत्तद्बन्धकरणं मतम् ॥ १३०१ ॥

स्वरैः पदैश्च बद्धं यत्करणं तत्पदादिमम् ।
यत्स्वरैर्बिरुदैर्बद्धं करणं बिरुदादि तत् ॥ १३०२ ॥

स्वरैः सतेनकैर्यत्तु तत्तेनकरणं मतम् ।
स्वरैः सकरपाटैर्यन्निबद्धं मुरजाक्षरैः[2] ॥ १३०३ ॥

---

[1] मातृकायां शीर्षकरूपेण निवेशितोऽयं सार्धश्लोकः ।

[2] 'मातृकायां पाटैर्यत्तद्बन्धकरणं मत'मिति भ्रमात्मकपाठो दृश्यते ।

पदैस्तच्चित्रकरणमभिधत्ते हरप्रियः ।

इति स्वरादिकरणाद्यष्टकरणलक्षणानि ॥

मङ्गलारम्भेत्यादिनोक्तं सप्तविंशतिकरणलक्षणं रत्नाकरे द्रष्टव्यम् ॥

अथ क्रमप्राप्तं ढेङ्कीलक्षणं लक्ष्यते :—

द्विर्गीत्वोद्ग्राहपूर्वार्धमुत्तरार्धं सकृत्ततः ॥ १३०४ ॥

मेलापकः प्रयोगात्मा न वा स्याद्वावुभावपि ।
अतालौ ढेङ्किकताले कङ्काले चाविलम्बितौ[1] ॥ १३०५ ॥

लयान्तरे ऽन्यतालेन ध्रुवाभोगौ द्रुत[2]स्त्विह ।
त्रिखण्डस्तत्र खण्डे द्वे गीयेते समधातुनी ॥ १३०६ ॥

तृतीयमन्यधातो[3]र्द्विराभोगस्तु सकृत्ततः ।
पुनर्गीत्वा ध्रुवे न्यासो यस्यां सा ढेङ्किका मता ॥ १३०७ ॥

चतुर्धा ढेङ्किका मुक्तावली स्याद्वृत्तवर्धनी ।
युग्मिनी वृत्तमाला च तासां लक्ष्माण्यमून्यथ ॥ १३०८ ॥

अभावश्छन्दसां वृत्तं वृत्ते वृत्तानि च क्रमात् ।
त्रिधा तिस्रो द्वितीयाद्या वर्णिका गणिता तथा ॥ १३०९ ॥

---

1 सुधाकरव्याख्यानुसारः पाठो ऽयं । 'विलम्बिते' इति कलानिधि-माश्रित्य पाठः ।

2 'ध्रुव' इति रत्नाकरमूलग्रन्थपाठस्समीचीनः ।

3 'तृतीयमुद्ग्रमेव' इति रत्नाकरमूलग्रन्थपाठः ।

मात्रिका वर्णजैर्वृत्तैर्गणजैर्मात्रिभिरपि ।
दशापि स्युः पुनस्त्रेधा क्रमालङ्करणा तथा ॥ १३१० ॥

विषमालङ्कृतिश्चित्रालङ्कृतिर्लक्षणानि तु ।
समालङ्कारसञ्ज्ञया च विषमा मिश्रिता क्रमात् ॥ १३११ ॥

इति त्रिंशद्हेङ्क्यः ॥

अथ क्रमप्राप्तं वर्तनीलक्षणं लक्ष्यते :—

स्वराद्यकरणस्येव वर्तन्या लक्ष्म किन्त्विदं ।
रासकादन्यतालः स्याल्लयो ज्ञेयो विलम्बितः ॥ १३१२ ॥

द्विरुद्ग्राहो ध्रुवाभोगौ सकृन्मोक्षो ध्रुवे भवेत् ।
कङ्काले प्रतिताले च कुडुक्के प्रतिमण्ठके ॥ १३१३ ॥

रचिता चेत्तदा ज्ञेया वर्तन्येव विवर्तनी ।

इति वर्तनी ॥

अथ झोम्पटस्य लक्षणं कथ्यते :—

द्विर्यत्रोद्ग्राहपूर्वार्धमुत्तरार्धं सकृत्ततः ॥ १३१४ ॥

मेलापकः प्रयोगाढ्यः स वा स्याद्द्विस्ततो ध्रुवः ।
आभोगन्तु सकृद्गीत्वा ध्रुवे न्यासः स झोम्पटः ॥ १३१५ ॥

निःसारुकः कुडुक्कश्च त्रिपुटप्रतिमण्ठकौ ।
द्वितीयो गारुगीरासप्रतिलग्नाड्डतालिकाः ॥ १३१६ ॥

एकतालीत्यमी तालाः झोम्पटे नियता दश ।
केचिन्मण्ठमपीच्छन्ति नैष लक्ष्येपु लक्ष्यते ॥ १३१७ ॥

तारजो ऽतारजश्चेति झोम्पटो द्विविधो मतः ।

शेषो रत्नाकरे द्रष्टव्यः ॥

अथ लम्भकलक्षणं लक्ष्यते :—

उद्ग्राहो द्विः सकृद्धेक खण्डो द्विशकलो ऽथवा ॥ १३१८ ॥

यत्र ध्रुवो द्विराभोगो ध्रुवे मुक्तिः स लम्भकः ।

भोगो ऽस्मिन्झोम्पटे ऽप्यूर्ध्वमिति लम्भकाद्दशेषो रत्नाकरे द्रष्टव्यः ॥

अथ रासकलक्षणं कथ्यते :—

यो झोम्पटगतं लक्ष्म गमकस्थानकैर्विना ॥ १३१९ ॥

भजते रासकः सो ऽयं रासतालेन गीयते ।
गणैर्वर्णैश्च मात्राभिः केचिदेनं त्रिधा जगुः ॥ १३२० ॥

स्याद्रासवलयो हंसतिलको रतिरञ्जकः ।
चतुर्थस्तत्र मदनावतारो द्विगुणादिजाः[1] ॥ १३२१ ॥

षडक्षराद्विताश्चिशदक्षरावधिवर्णजाः ।
पञ्चविंशतिराख्याताश्चरणादष्टमात्रिकात् ॥ १३२२ ॥

1 'मदनावतारश्छगणादिजाः' इति रत्नाकरमूलग्रन्थस्य पाठान्तरम् ।

पट्टीमात्रावधिप्रोक्ता स्निग्धाश्च मात्रिकाः ।
लक्ष्ये प्रसिद्धिवैधुर्यात्तेष्वस्माकमनादरः ॥ १३२३ ॥

इति रासकलक्षणम् ॥

अथैकताल[illegible]लक्षणं कथ्यते :—

द्विरुद्ग्राहौ ध्रुवो ऽपि द्विराभोगध्रुवकौ ततः ।
गीतस्य न्यासो यत्र सा स्यादेकताल्येकतालिका ॥ १३२४ ॥

अस्यामालापमात्रेण केचिदुद्ग्राहमूचिरे ।

इति सूडक्रमः ॥

इति रत्नाकर[illegible] सूड[illegible]प्रबन्धलक्षणम् ॥

अथ हरिपाल[illegible] प्रबन्धोद्देशः कथ्यते :—

अथ गीतप्रबन्धानां क्रियते तदनुक्रमात् ॥ १३२५ ॥

मातृका प्रथमं प्रोक्ता पञ्चतालेश्वरस्ततः ।
गद्यं वृत्तं दरकं (दण्डकं) च कल[illegible]स्ततः परम् ॥ १३२६ ॥

ततः सिंहपदं[1] प्रोक्तं ततश्च वनमालिका ।
सिंहविक्रमगाथे च दोधका द्विपदी घटः (?घटः) ॥ १३२७ ॥

चतुष्पदी च वस्तुस्यात्करणं स्वरपूर्वकम् ।
तथैवकरणं प्रोक्तमन्यत्स्वरपदादिकम् ॥ १३२८ ॥

---

1 'हंसपद' मिति पाठस्साधुरिति भाति ।

अपरश्चित्रकरणं तेनादिकरणन्ततः ।
तथान्यन्मिश्रकरणं वर्तनी च विवर्तनी ॥ १३२९ ॥

एला भवेत्ततो ढेङ्की ध्वनिकुट्टनिझोम्बडौ ।
लम्भको रासकश्च स्यादेकताली स्वराङ्ककम् ॥ १३३० ॥

त्रिभङ्गिः स्याद्द्विचित्रश्च तथा रागकदम्बकः ।
तालार्णवस्ततः पश्चाद्रससन्दोहमण्डनौ ॥ १३३१ ॥

चतुर्मुखाभिधानोऽथ स्याद्वर्णस्वरकस्तथा ।
अन्यो हरिविलासाख्यः पञ्चभङ्गिस्ततः परम् ॥ १३३२ ॥

पञ्चाननस्ततः कश्चित्तथा श्रीरङ्गनामकः ।
अन्यः शरभलीलः स्यात्सिंहलीलाह्वयस्ततः ॥ १३३३ ॥

विजयो विजयश्रीश्च तथा श्रीवर्धनो भवेत् ।
हर्षध्वनिस्ततश्चान्यः प्रतापादिस्तथाध्वनिः[1] ॥ १३३४ ॥

सुदर्शनाभिधः पश्चान्नन्दनश्शुकसारिका ।
रङ्गो रङ्गः सिंहपूर्वो विक्रान्तः शुकचञ्चुकः ॥ १३३५ ॥

कैवाटललितौ स्यातां मङ्गलाचारकस्तथा ।
धवलं मङ्गलं झम्पा[2] चर्चर्यपि[3] चतुष्पदी ॥ १३३६ ॥

---

1 'हर्षवर्धननामाद्यः प्रतापादिस्तु वर्धन' इति च हरिपालीयमूलग्रन्थपाठान्तरः । रत्नाकरे प्रबन्धभेदाविमौ वर्धनोपपदेनैवाभिहितौ ।

2 'कम्पे'ति हरिपालीयमूलग्रन्थपाठः ।

3 'च चर्यापी'ति तत्रैव ।

वली (?ओवी) लोल्ली[1] ध्रुवो मण्ठः प्रतिमण्ठो ऽथ रूपकः ।
त्रिविडा[2]पि च झम्पा स्यादर्ध (स्यादड्ड) तालस्तु छन्दकः[3]॥१३३७॥

दन्ती चेति प्रबन्धानां षट्सप्ततिरुदीरिताः[4] ।

इति हरिपालीयोक्तप्रबन्धोद्देशः । रत्नाकरोक्तप्रबन्धप्रपञ्चस्याति-विस्तरत्वादस्य ग्रन्थस्य सङ्ग्रहत्वाच्च कतिचित्प्रबन्धाँल्लक्ष्यलक्षण-सहितान् लिखित्वा परेषां सम्बन्धानां लक्ष्यलक्षणानि सङ्गीतरत्ना-करे द्रष्टव्यानीति मनीषया मुम्मडिचिक्कभूपालेनोद्देशमात्रं लिखितम् ॥

अथ क्रमप्राप्ता रत्नाकरोक्तगीतगुणा वक्ष्यन्ते :—

व्यक्तं पूर्णं प्रसन्नञ्च सुकुमारमलङ्कृतम् ॥ १३३८ ॥

समं सुरक्तं श्लक्ष्णञ्च विकृष्टं मधुरं तथा ।
दशैते स्युर्गुणा गीते तत्र व्यक्तं स्फुटस्वरैः ॥ १३३९ ॥

प्रकृतिप्रत्ययैश्चोक्तं छन्दोतान[5]पदस्वरैः (?दैः) (१)
पूर्णं पूर्णाङ्गगमकम् (२) प्रसन्नं प्रकटार्थकम् (३) ॥ १३४० ॥

सुकुमारं कण्ठभवम् (४) त्रिस्थानोत्थमलङ्कृतम् (५) ।
समवर्णलयस्थानं सममित्यभिधीयते (६) । ॥ १३४१ ॥

---

1 'ओवीरो मधुवे 'ति तत्रैव ।

2 अयञ्च त्रिपुटताल एव देशभाषायां तालो ऽयं तिवुडे, तिविडे इति चाभिहितः ।

3 'विन्दकः' इति हरिपालीयमूलग्रन्थपाठः ।

4 किन्तु पञ्चसप्ततिरेव दृश्यते ।

5 'राग' इति रत्नाकरमूलग्रन्थपाठः ।

सुरक्तं वल्लकीवंशकण्ठध्वानैकतायुतम् । (७)
नीचोच्चद्रुतमध्यादेः श्लक्ष्णत्वे श्लक्ष्णमुच्यते (८) ॥ १३४२ ॥

उच्चैरुच्चारणादुक्तं विकृष्टं भरतादिभिः (९) ।
मधुरं धुर्यलावण्यपूर्णमुक्तं मनोहरम्[1] (१०) ॥ १३४३ ॥

इति गीतगुणाः ॥

अथ गीतदोषाः कथ्यन्ते :—

दुष्टं लोकेन शास्त्रेण श्रुतिकाल विरोधि च ।
पुनरुक्तं कलाबाह्यं गतक्रममपार्थकम् ॥ १३४४ ॥

ग्राम्यं सन्दिग्धमित्येवं दशधा गीतदुष्टता ॥ १३४४ अ ॥

इति रत्नाकरोक्ताः गीतदोषाः निरूपिताः ॥

सुखिनि सुखनिषेको दुःखितानाञ्च बन्धुः
सकलगुणनिधानं सर्वभोगप्रधानम् ।
रतिपरणविधाता कामिनीचित्तहारी
जयति जगतिनाथः पञ्चमश्चोपवेदः ॥ १३४५ ॥

वीरारातिनृपालशेखरघनप्राणानिला विहीश्वर
प्रत्यग्रोऽमितरूपभीषणगुणः प्रस्फीतखड्गप्रभः ।
पादाक्रान्तदुरन्तवैरिमकुटप्रत्युप्तमाणिक्यभा
संबद्धप्रविभासिताङ्घ्रिनखरान्मानाविधातिद्युतिः ॥ १३४६ ॥

---

1 'पूर्णं जनमनोहर' मिति रत्नाकरमूलग्रन्थपाठः ।

रूपे नूतनमन्मथो वितरणे कर्णो वरः शूरता–
 वृत्तावन्यधनञ्जयः शमगुणे सत्ये नवो राघवः ।
गाम्भीर्ये च धृतौ नवीनजलधिर्नव्यो हिमक्ष्माधरो
 नूतनस्साहसविक्रमार्कनृपतिः रामः प्रतिज्ञाविधौ ॥ १३४७ ॥

गौरीनाथाङ्घ्रिसेवास्मरणकथनसत्पूजनध्याननिष्ठः
 आसक्तावनी भृत्प्रथमविगणितप्रस्फुरन्नामधेयः ।
आचार्याध्येतृशास्त्रप्रभटकविनटाभ्यस्तविद्यापरीक्षो
 दक्षो ऽभूद्देवरक्षाक्षयनिहितपरिस्फूर्तिमन्मानसाब्जः ॥ १३४८ ॥

श्रीमद्विज्जावराख्ये सुविदितवरणे पट्टणे सिंहपीठे
 प्रस्फूर्जद्राज्यपालः प्रथिततत(म)यशा मद्दगिर्युज्ज्वलाङ्कः ।
चिक्केन्द्रो गुर्वमाम्बासुकृतमतु(तनु)रुतां पूर्वजन्मन्यनन्तम्
 तत्पुण्याशेपरम्यं फलमिव तनयाकारवद्राजमानः ॥ १३४९ ॥

श्रीमद्वेङ्कटशैलनाथगृहिणीसम्पूर्णराजत्कृपा–
 वीक्षालब्धमतङ्गजाश्वसुभटश्रीराज्यपुत्राधिकः ।
सत्साहित्यकवित्वगानभरतप्रख्यातविद्याधिकः
 साधुर्मुम्मडिचिक्कभूपतिवरः शूराग्रगण्यः प्रभुः ॥ १३५० ॥

श्रीवेङ्कटेश्वरपदार्पणरम्यशब्दे ग्रन्थे नवीनभरते रसभावयुक्ते ।
सर्वोपकारिणि समस्तजनोपसेव्ये गीताश्रयस्य विवृतिं व्यतनोदसाम्याम्
॥ १३५१ ॥

गाने केचन दक्षिणश्च भरते केचित्प्रवीणाः परे
साहित्ये निपुणाः कवित्वनिरताः केचित्सुतर्के धियः ।
केचिन्मद्दलवादने च कुशलाः शास्त्रे च मान्त्रे युताः
सर्वे मुम्मडिचिक्कभूपतिं दृढं नित्यम्बहू कुर्वते ॥ १३५२ ॥

पूर्वार्यैर्मुनिशेखरैर्भरतसन्मुक्ता समूहः कृतः
तं स्वीकृत्य विविच्य मुम्मडि (कनतर?-)चिक्केन्द्रनाम्ना मया ।
शीर्षाक्ष्यङ्घ्रिकगाङ्गकेषु च यथायोग्यं विभूषाः कृताः
गृह्णन्तां भवदीप्सितास्तामधरे हेमण्डिता मत्कृपाः (?) ॥१३५३॥

इति श्रीमदगिरिशासनाङ्क, (मरेहोक)वरकाव्य, मारान्तरकोल्व, वडेगेरेमल्ल, वङ्क्रिणिनारायणाङ्क, गण्डभेरुण्ड, तलाघराय चोळंभेरि-मण्डलिकरगण्ड, सरनेज (? समरनोद) बिरुदाङ्क, येळ्नाटपटभद्र, हगलुकग्गोलु(-कग्गोले)राय, अल्लासु (मल्लानु) खानसप्ताङ्गहरण, श्रीरङ्गरायशेखरदत्तशङ्खचक्राबिरुद, श्रीमद्विजवर (श्रीमद्विज्जवर) पुरवराधीश्वरोज्ज्वल, मुम्माड (इम्मडि?) चिक्कभूपालकुमार, मार-प्रतिमान, कुमारसमीरनन्दनशौर्यबलाधिक, वितरणनूतनरवितनय, प्रतापसाहसविक्रमार्क, चतुःषष्टिकलाप्रवीण, मुम्मडिचिक्कभूपाल-विरचिते अभिनवभरतसारसङ्ग्रहाख्ये श्रीवेङ्कटेश्वरपादारविन्दाङ्किते ग्रन्थे द्वितीयाख्यायां भरतसञ्जीविन्यां नादादिगीतगुणान्तप्रपञ्चो नाम पञ्चमोऽध्यायः ॥

समाप्तो ऽयं ग्रन्थः ॥



# APPENDIX I

## Authorities Cited

| | *Authority* | *Work* | *Pages* |
|---|---|---|---|
| 1. | Bharata | Nāṭya Śāstra | 1, 3 *et seq.* |
| 2. | Dattila | .... | 2. |
| 3. | Granthāntara | .... | 48, 69, 111, 137 |
| 4. | Haripāla | Saṅgīta Sudhākara | 1, 8 *et seq.* |
| 5. | Kohala | .... | 2. |
| 6. | Mataṅga | (Bṛhad-deśī ?) | 45, 58, 67, 78 |
| 7. | Matāntara | (Bharatārṇava, Svara-rāgasudhārasa, etc.) | 2, 29, 38, 42, 59, 86, 280 |
| 8. | Nārada | .... | 2. |
| 9. | Rāmāmātya | Svaramela-kalānidhi | 202, 268 ff. |
| 10. | Śārṅga deva | Saṅgīta Ratnākara | 1, 3 *et seq.* |
| 11. | .... | Sakalamatasaṅgraha | 277 ff. |
| 12. | Sudhākalaśa | Saṅgīta (–upaniṣat–)sāra | 123, 131 ff. |

## APPENDIX II

### Secondary Citations

| | *Authority* | *Cited by* | *On* | *Pages* |
|---|---|---|---|---|
| 1. | Bharata | Mataṅga | Mṛdaṅga | 58 |
| | (Muni) | Śārṅga deva | ,, | 56 |
| 2. | Bṛhad-deśī | ,, | Anukta-janaka rāgas | 195 |
| 3. | Dattila | Haripāla | Velāvulī rāga | 235 |
| 4. | Durgaśakti | Śārṅga deva | Narta rāga | 217 |
| 5. | Kaśyapa | ,, | ,, | 217 |
| 6. | Kohala | Haripāla | Mūrchanā | 140 |
| 7. | Mataṅga | Śārṅga deva | Ruñja | 80 |
| | | ,, | Bhāṣā rāgas | 195 |
| | | ,, | Lalita (II) rāga | 261 |
| 8. | Nārada | Haripāla | Śaka rāga | 216 |
| | | ,, | Nāgadhvani rāga | 237 |
| | | Śārṅga deva | Gāndhāra-grāma | 135 |
| 9 | Tumburu | Haripāla | Mūrchanā | 140 |
| 10. | Yāṣṭika | Śārṅga deva | Bhāṣā rāgas | 195 |
| | | ,, | Trāvaṇī rāga | 265 |

## APPENDIX III

### A. Comparison of the Bhāratīya text of the present work with that of the Kavyamala edition

Abbreviations

1. ABS : Abhinava Bharatasārasaṅgraha.
2. NS : Nāṭya Śāstra (Kavyamala edition).
3. a, b, c, d : the four hemistitches of a couplet in order.
4. l : lacuna in NS.
5. bv: variant reading in NS for the hemistitch b.
6. bx : erroneous reading in NS for the hemistitch b.
7. * : Prose passage ; the first number refers to the page and the subsequent numbers refer to the lines therein.

| ABS | NS | Remarks | ABS | NS | Remarks |
|---|---|---|---|---|---|
| **Chap 1.** | **Chap. 28** | | 269 ab | .... | |
| | | | cd | 5 cd | |
| 4 ab | 1 ab | | 270 ab | 6 ab | |
| 4 cd | cd | | cd | cd | |
| 5 ab | 2 ab | | 271 ab | .... | |
| 5 cd | cd | | cd | 7 ab | |
| | | | 272 ab | cd | |
| | **Chap. 30** | | cd | 8 cd | |
| | | | 273 ab | 8 ab | |
| 266 cd | 1 ab | | cd | 9 ab | bv |
| 267 ab | cd | bv | 274 ab | cd | |
| cd | 2 ab | bv | cd | 10 ab | |
| 268 ab | 5 ab | av | 275 ab | cd | abv |
| cd | 4 cd | | cd | 11 cd | av |

| ABS | NS | Remarks |
|---|---|---|
| 276 ab | 12 ab | |
| cd | cd | dv |
| 277 ab | 13 ab | |
| | **Chap. 34** | |
| 444 cd | 209 cd | |
| 445 ab[1] | 210 ab | |
| cd | 210 cd | cdv |
| 446 ab | .... | |
| cd | .... | |
| 447 ab | 211 ab | av |
| cd | cd | cdv |
| 448 ab[2] | 212 ab | |
| cd | 213 cd | |
| 449 ab | 214 ab | |
| cd | cd | |
| 450 ab | 215 ab | abx |
| cd | cd | |
| 451 ab | 216 ab | abv |
| cd | cd | |
| 452 ab | 217 ab | |
| 463 cd | cd | |
| 464 ab | 218 ab | abv |
| cd | cd | cdv |
| 465 ab | 219 ab | abv |
| 499 cd | 251 cd | |
| 500 ab | 252 ab | abx |
| cd | cd | cdx |
| 501 ab | 253 ab | abx |
| cd | cd | cdx |
| 502 ab | 254 ab | bx |
| cd | cd | |
| 503 ab | 255 ab | ax |
| cd | cd | |
| 504 ab | 256 ab | abx |
| cd | cd | cdv |
| 505 ab | 257 ab | av |
| cd | cd | |
| 506 ab | 258 ab | av |
| cd | cd | cv |
| 507 ab[3] | 259 ab | abv |
| cd | cd | cv |
| 508 ab | 260 ab | bx |
| cd | cd | av |
| 654 cd | 22 ab | bv |
| 655 ab | cd | dv |
| cd | 23 ab | bv |
| 656 ab | cd | |
| cd | 24 ab | |
| 657 ab | cd | cv |
| cd | 25 ab | |
| 658 ab | cd | cdv |
| cd | .... | |
| 659 ab | 26 ab | abv |
| cd | cd | dv |
| 660 ab | 27 ab | ax |
| cd | cd | cx |
| 661 ab | 28 ab | ax |
| cd | cd | cv |
| 662 ab | 29 ab | bv |

1. b should read हरीतकियत्राश्रया.
2. NS adds two lines after b.
3. a should read स्फुटप्रहारम् .

| ABS | NS | Remarks |
|---|---|---|
| cd | cd | |
| 663 ab | .... | |
| cd | 30 ab | av |
| 664 ab | cd | cv |
| cd | 31 ab | bv |
| 665 ab | cd | cdv |
| cd | 32 ab | abv |
| 666 ab | cd | cdx |
| cd | 33 ab | bv |
| 667 ab | cd | av |
| cd | 34 ab | |
| 668 ab | cd | |
| cd | 35 ab | |
| 669 ab | cd | |
| cd | 36 ab | |
| 670 ab | cd | |
| cd | 37 ab | av |
| 671 ab | cd | |
| cd | 38 ab | ax |
| 672 ab | cd | cv |
| *90, 6-19<br>91, 1-8 | *38cd ff. | lvx |
| 672 ab[1] | 40[2] | abv |
| cd | 40 ab | |
| *91,11-12 | 40 ff. | x |
| 673 ab | 43 ab | abx |
| cd | cd | dv |
| 674 ab<br>to 675 cd | *416,<br>8-10 | l, v |

| ABS | NS | Remarks |
|---|---|---|
| 676 ab | .... | |
| cd | .... | |
| 677 ab | 54 cd | cv |
| cd | 55 ab | abv |
| 678 ab | .... | |
| cd | .... | |
| 679 ab | .... | |
| cd | 56 ab | av |
| 680 ab | cd | |
| cd | 57 ab | |
| 681 ab | cd | dv |
| cd | 58 cd | dv |
| 682 ab | 59 cd | dv[3] |
| cd | 60 ab | av[3] |
| 683 ab | cd | cdv |
| cd | 61 ab | abv |
| 684 ab | cd | dx |
| cd | 62 ab | |
| 685 ab | cd | cdv |
| cd | 63 ab | |
| 686 ab | cd | |
| cd | 95 ab | |
| 687 ab | 95 cd | |
| | *420,9-16 | vx |
| cd | 99 ab | bv |
| *94, 3-5 | *421, 1-3 | x |
| 688 ab | 99 cd | cdvx |
| cd | .... | |
| 689 ab | 102 ab | |

1. This is *l*. 9 on p. 91.

2. Verse 40 in NS has 3 lines. The first line obtains equation in this case.

3. The editors of NS mistakenly leave 58ab, 59ab as lacuna. But the text in ABS is continuous.

| ABS | NS | Rem-arks | ABS | NS | Rem-arks |
|---|---|---|---|---|---|
| cd | cd | | 704 ab | 113 ab | bv |
| 690 ab | .... | | cd | cd | |
| cd | .... | | 705 ab | 114 ab | ax |
| 691 ab | 101 ab | | cd | .... | |
| cd | cd | | *96, 5–6 | *422,23-24 | v |
| 692 ab | ... | | 7–8 | *423, 1–3 | |
| cd | .... | | 706 ab | .... | |
| 693 ab | .... | | *96, 12 | *423, 7 | v |
| cd | ...... | | 706 cd | 122 ab | |
| 694 ab | 103 ab | bv | 707 ab | cd | cdx |
| cd | cd | cx | cd | 123 ab[2] | |
| 695 ab | 104 ab | | 708 ab | cd[2] | cdx |
| cd | cd | cv | cd | 124ab[3] | |
| 696 ab | 105 ab | | 709 ab | 125 ab | abvx |
| cd | cd | | cd | cd | |
| 697 ab | 106 ab | | 710 ab | 126 ab | abvx |
| cd | cd[1] | cdv | cd | cd | cx |
| 698 ab | 107 ab[1] | | 711 ab | 127 ab | |
| cd | cd | cdv | cd | cd | |
| 699 ab | 108 ab | | 712 ab | 129 ab | |
| cd | cd | | cd | cd | |
| 700 ab | 109 ab | abv | 713 ab | 128 ab | |
| cd | cd | cdv | cd | cd | cv |
| 701 ab | 110 ab | | 714 ab | 131 ab | bx |
| cd | cd | cdvx | cd | cd | |
| 702 ab | 111 ab | x | 715 ab | 130 ab | |
| cd | cd | x | cd | cd | cv |
| 703 ab | 112 ab | x | 716 ab | 133 ab | bv |
| cd | cd | 1 | cd | cd | |

1. NS brands this as corrupt but the text is corroborated by ABS.

2. NS marks these lines with a question.

3. NS leaves 124 cd blank, but this is no lacuna; the text is continuous in ABS.

| ABS | NS | Rem-arks | ABS | NS | Rem-arks |
|---|---|---|---|---|---|
| 717 ab | 134 ab | bx | 746 ab to 752 cd | lacuna | |
| cd | cd | cv | 753 ab | 146 ab | av |
| *98,6-10 | ... | | cd | cd | dv |
| 718 ab | 137 ab | abvx | 755 ab to 758 cd | lacuna | |
| cd | cd | cv | 759 ab | 156 ab | bv[3] |
| *98,14-15 | 138 ab to 139 cd | v[1] | cd | cd | cdv |
| 719 ab to 726 cd | lacuna | | 760 ab to 762 ab | lacuna | lxv[4] |
| 727 ab | 147 ab | | | | |
| cd | cd | cv | | **Chap. 32** | |
| 728 ab | 144 ab | | | | |
| cd | cd | cdv ? | | | |
| 729 ab | 141 ab | bv | 762 cd | 421 ab | ab[5] |
| cd | cd | cl | 763 ab | 423 ab | bv |
| 730 ab to 733 cd | lacuna[1] | | cd | .... | |
| | | | 764 ab | .... | |
| 734 ab | 151 cd[2] | | cd | .... | |
| 734 cd | 152 cd | dv | 765 ab | .... | |
| 735 ab to 743 cd | lacuna | | cd | 423 cd | |
| | | | 766 ab | .... | |
| 744 ab | 153 ab | bx | cd | .... | |
| cd | cd | cdv | 767 ab | 425 cd | cdv |
| 745 ab | 154 ab | av | cd | 426 cd | cv |
| cd | cd | dvl | 768 ab | 427 ab | bv |

1. NS leaves 138 cd, 139 ab and the four lines 142 ab to 143 cd blank.
2. NS is uncertain of this text.
3. NS calls this jati Vancitika.
4. The portion on the 18 vadya-alankaras (jatis) in NS is full of lacunae, corrupt, confused and interpolated. Jatis other than those found in ABS are described.
5. Lacuna in ABS for one line after b,

| ABS | NS | Remarks |
|---|---|---|
| 768 cd | .... | |
| 769 ab | .... | |
| cd | .... | |
| | **Chap. 34** | |
| 770 ab | 175 cd | dv |
| *105, 8–12 | *427, 18–21 | v |
| 770 cd | 176 ab | abv[1] |
| 771 ab | cd | cdv |
| cd | 177 ab | abv |
| 772 ab | cd | cv |
| cd | 178 ab | av |
| 773 ab | cd | |
| cd | 179 ab | bv |
| 774 ab | cd | cv |
| cd | 180 ab | av |
| 775 ab | cd | cv |
| cd | 182 ab | abv |
| 776 ab | cd | cdv |
| cd | 181 ab | |
| 777 ab | cd | cv |
| cd | 183 ab | bv |
| 778 ab | cd | dv |
| cd | 184 ab | abv |
| 779 ab | cd | cv |
| cd | 185 ab | abv[2] |
| 780 ab | cd | cdv[2] |

| ABS | NS | Remarks |
|---|---|---|
| 780 cd | .... | |
| 781 ab | .... | |
| cd | 186 ab | abv[3] |
| 782 ab | cd | x |
| cd | 187 ab | x |
| 783 ab | cd | |
| cd | 188 ab | |
| 784 ab | cd | cv |
| cd | 190 ab | bv |
| 785 ab[4] | cd | |
| cd | 189 ab | av |
| 786 ab | cd | cv |
| cd | 192 ab | abvx |
| 787 ab | cd | cdv |
| cd | 193 ab | |
| 788 ab | cd | cdv |
| cd | 194 ab | |
| 789 ab | cd | |
| cd | 195 ab[5] | |
| 790 ab | cd[5] | |
| cd | 196 ab | |
| 791 ab | cd | cv |
| cd | 197 ab | bv |
| 792 ab | cd | dv |
| cd | 198 ab | |
| 793 ab | cd | |
| 842 cd | 227 ab | |
| 843 ab | cd | cv |
| cd | 228 ab | bx |

1. NS is uncertain of this text.
2. NS call this jati Prativicyuta.
3. NS marks this line with a question.
4. Lacuna in ABS for two lines after b.
5. NS calls this jati Samavayaka.

| ABS | NS | Remarks | ABS | NS | Remarks |
|---|---|---|---|---|---|
| 844 ab | 228 cd | cx | 858 ab | 242 cd | x |
| cd | 229 ab | | cd | 243 ab | abv |
| 845 ab | cd | | 859 ab | cd | cdv |
| cd | 230 ab | | cd | 244 ab | |
| 846 ab | cd | dv | 860 ab | cd | |
| cd | 231 ab | bv | cd | 245 ab | bv |
| 847 ab | cd | cv | 861 ab | cd | dv |
| cd | 232 ab | | cd | 246 ab | av |
| 848 ab[1] | .... | | 860 ab[3] | cd | cv |
| cd[1] | .... | | cd[3] | 247 ab | abv |
| 849 ab[1] | ... | | 861 ab | cd | cx[4] |
| cd | 234 ab | | cd | 250 cd | cdv |
| 850 ab | cd | cv | 862 ab | 252–1,ab[5] | bv |
| cd | 235 ab | bv | cd | 251–2,ab | |
| 851 ab[2] | cd | | | | |
| cd[2] | 236 ab | | | | |
| 852 ab | cd | dx | Chap. 2 | Chap. 23 | |
| cd | 237 ab | av | | | |
| 853 ab | cd | cv | 55 cd | 22 ab | |
| cd | 238 ab | abv | 56 ab | cd | dv |
| 854 ab | cd | cv | cd | 23 ab | |
| cd | 239 ab | | 70 cd | 23 cd | |
| 855 ab | cd | cv | *128, | *303, | |
| cd | 240 ab | | 13–17 | 14–17 | v |
| 856 ab | cd | dx | 71 ab | 24 ab | |
| cd | 241 ab | | cd | cd | |
| 857 ab | cd | cv | *129, | *303, | |
| cd | 242 ab | x | 2–12 | 20-27 ff. | v[6] |

1. Lines 232 cd, 233 ab, 233 cd in NS are completely dissimilar to these three lines.
2. ABS has incorrect text.
3. Wrong enumeration in ABS.
4. Lacuna in ABS for five lines after b.
5. Verse 251 has three lines.
6. Lacuna in ABS for ll, 4-11.

| ABS | NS | Remarks | ABS | NS | Remarks |
|---|---|---|---|---|---|
| | Chap. 28 | | | Chap. 29 | |
| *135, 13–14 | *304, 3–4 | | 224 ab | .... | |
| | | | cd | 17 ab | |
| 118 ab | 25 ab | | 225 ab | cd | |
| cd | cd | | cd | 18 ab | av |
| *135, 17–19 | *304, 7–9 | | 226 ab | cd | cv |
| | | | cd | 19 ab | |
| *136, 1–9 | *304 9–16 | | 227 ab | cd | |
| | | | cd | 20 ab | |
| 119 ab | 26 ab | | 228 ab | cd | |
| cd | cd | | cd | 21 ab | bv |
| 120 ab | 27 ab | bv | 229 ab | cd | dv |
| cd | cd | cv | cd | 22 ab | bv |
| 121 ab | 28 ab | | 230 ab | cd | cx |
| cd | cd | | 245 ab | 23 ab | |
| 122 ab | 29 ab | | cd | cd | |
| cd | cd | | 246 ab | 24 ab | bv |
| 143 ab | 30 ab | | cd | cd | |
| cd | cd | cx | 247 ab | 25 ab | bvx |
| 144 ab | 31 ab | | cd | cd | |
| *139, 9–10 | 31 cd, *305, 6 | | 248 ab | 26 ab | abx |
| | | | cd | cd | vx |
| 144 cd | 32 ab | | 249 ab | 27 ab | av |
| 145 ab | cd | dv | cd | cd | dx |
| cd | 33 ab | | 250 ab | 28 ab | ax |
| 146 ab | cd | | cd | cd | dv |
| *139, 16 | *305, 12 | | 251ab | 29 ab | abv |
| 146 cd | *305, 18 | v | cd | cd | cdv |
| 147 ab | *305, 19 | v | 252 ab | 30 ab | av |
| cd | 34 ab | | cd | cd | x |
| 148 ab | cd | cx | 253 ab | .... | |
| cd | 35 ab | | cd | .... | |
| 149 ab | cd | | 254 ab | 31 ab | abv |
| *140, 4-9 | *305, | | cd | cd | cdv |
| | 24–26ff. | lvx | 255 ab | 32 ab | abx |

| ABS | NS | Remarks |
|---|---|---|
| 255 cd | 32 cd | cx |
| 256 ab | 33 ab | |
| cd | cd | |
| 257 ab | .... | |
| cd | 34 ab | ax |
| 258 ab | cd | |
| cd | 35 ab | ax |
| 259 ab | cd | cdv |
| 313 ab | 16 cd | |
| cd | 36 ab | av |
| 314 ab | cd | |
| cd | 37 ab | |
| 315 ab | cd | |
| 315 cd | 38 ab | bv |
| 316 ab | 45 ab | |
| cd | ....[1] | |
| 317 ab | 40 cd | cdv |
| cd | .... | |
| 318 ab | .... | |
| cd | 46 ab | |
| 319 ab | 45 cd | |
| cd | 41 ab | |
| 320 ab | cd | |
| cd | 42 ab | bv |
| 321 ab | cd | dv |
| cd | 43 ab | abvx |
| 322 ab | cd | x |
| cd | 44 ab | bv |
| 322 ab to 340 ab | Lacuna | |
| 340 cd | 47 ab | av |
| 341 ab | cd | cx |
| cd | 46 cd | cdv |

**Chap. 28**

| ABS | NS | Remarks |
|---|---|---|
| 372 ab | 39 ab | |
| cd | cd | |
| 373 ab | 40 ab | ax |
| cd | cd | cv |
| 374 ab | 41 ab | bv |
| cd | cd | |
| 375 ab | 42 ab | |
| cd | cd | |
| 376 ab | 43 ab | |
| cd | cd | |
| 377 ab | 44 ab | |
| cd | cd | |
| 378 ab | 45 ab | |
| cd | cd | |
| *170, 313–19 | *308, 4, 5–11 | vl |
| 379 ab | 46 ab | |
| cd | cd | |
| 380 ab | 47 ab | |
| cd | cd | |
| 381 ab | 48 ab | |
| cd | cd | |
| 382 ab | 49 ab | bv |
| cd | dc | |
| 383 ab | 50 ab | av |
| cd | cd | |
| 384 ab | 51 ab | |
| cd | cd | |
| 385 ab | 52 ab | av |
| cd | cd | cv |

1. Dissimilar.

| ABS | NS | Remarks | ABS | NS | Remarks |
|---|---|---|---|---|---|
| 386 ab | 53 ab | | | Chap. 33 | |
| cd | cd | | | | |
| 387 ab | 54 ab | | 521 ab | .... | |
| cd | cd | | cd | 438 ab | |
| 388 ab | 55 ab | av | 522 ab | cd | |
| cd | cd | | cd | 439 ab | abv |
| 389 ab | 56 ab | | 523 ab | cd | cdv |
| | | | cd | 440 ab | abv |
| | | | 524 ab | ....[1] | |
| | | | cd | ....[1] | |

1. Dissimilar.

## B. Ellipses in ABS supplied by NS.

1. Two lines after 448 b :

   मुखं तस्य प्रकर्तव्यमङ्गुलानि चतुर्दश ।
   आलिङ्ग्यश्चैव कर्तव्यो ऽगमात्रमथापि च ॥

2. Two lines after 668 b after tripāṇi :

   समायतिः दृढतश्चापि कर्यो यत्र भवेदथ ।
   तथैवोपरिपाणिश्च राज्ञस्तैव विधिर्भवेत् ॥

3. ABS, p. 96 :

   गुरुलघुसंयोगलक्षणं मूलग्रन्थ एव पतितम् । तस्मादत्र न लिखितम् ॥
   But NS, p. 423, ll. 1-3 :
   गुरुलघुसञ्चयो नाम —लघुकैरह(लघ्वंकैर्दरु)तल्लोपे लयप्रवृत्तौ ।
   यथा—(example follows) । इति संयोगो गुरुलघु(ः) स्यात् ।

4. ABS omits Grahasama both in enumeration and description (p. 97). NS has :

   ततावनद्धवंशानामेकश्रुतिकृतो ऽपि च ।
   ग्रहो मानेन सहितस्तद्धै ग्रहसमं भवेत् ॥

   (p. 424, ll. 3-4)

5. One line after 728 b :

पर्यायजातिरियं मध्यमपुरुषेषु कर्तव्या ।

(p. 425, 144 cd)

6. One line between 734 b and 734 c :

वाद्यहृतलयम (वऽ)स्त्वं जातिः सा स्यान्महारम्भा ।

(p. 425, 152 ab)

7. NS offers the description of the additional jāti called Samaviśama : (ABS, p. 100)

कृतो परिकृतं वाद्यं दृत (द्रुत)लयं (लयः) समारूढम् ।

पुनरेव समस्तं स्यात् समविषमा सा तु विज्ञेया ॥

(p. 425, 145 ab, cd)

8. One line between 762 b and 762 c (ABS, p. 104) :

अभाण्डमेकं गानस्य परिवर्तं प्रयोजयेत् ।

9. In stead of 766 ab and 766 cd, NS has :

ध्रुवायोगस्तु ................................ ।

...........ग्रहो यस्मात् कलातालसमन्वितः ।

and then inserts one line anterior to 766 a :

स तु भाण्डेन कर्तव्यस्तज्ज्ञैर्गतिपरिक्रमे ।

and one more line after 767 b :

विलम्बिता स्थिता योगे संनिपातेन कल्पते ।

10. Two lines of interpolation after 785 b (ABS, p. 108) :

प्रशान्तनियमोपेतः स्फुटं नाट्यसमन्वितः ।

न प्रयाति च गीतं च स ज्ञेयो नियमान्वितः ॥

11. NS has three dissimilar lines in place of 848 ab, cd and 849 ab (ABS, p. 116) :

पायसं घृतमध्वक्तं चंदनं कुसुमानि च । (232 cd)

शुक्लानि चैव वासांसि दत्वालिंग्ये स्वयंभुवे । (233 ab)

त्र्यंबकाय दातव्यः सगणायोर्ध्वके बलिः ॥ (233 cd)

12. NS improves the ABS reading of 851 ab, cd thus (ABS, p. 117) :

वैष्णवे मण्डले स्थाप्यः सर्वबीजगतोऽङ्किके । (236 cd)
स्रग्वस्त्रालेपनैः पीतैश्चारुमिश्च मपायसैः ॥ (236 ab)

13. NS adds five lines (interpolated ?) after 861 b (ABS p. 48) :

(?) पसंघतानं कक्ष्यांश्च तथा चावनताः पुनः । (248 ab)
आतोद्यपणवैश्चैव नर्तकोपनतास्तथा ॥ (248 cd)
शान्तिकर्म प्रयुंजीत वि(धि)दृष्टेन कर्मणा । (249 ab)
चत्वारः पणवाः कार्याः दशरूपविधौ पुनः ॥ (249 cd)
आतोद्यास्वपि तान्येव नानावस्थासु वादयेत् । (250 ab)

14. In place of 316 ab, cd (ABS, p. 162), NS has one line :

सर्व साम्यात् समो ज्ञेयः स्थितस्त्वेकस्वरे ऽपि गः । (38 ab)

and adds four further lines :

श्रुतयो ऽन्या द्वितीयस्या मृदुमध्यायताः स्मृताः । (38 cd)
आयतत्वं तु चेत्नीचं मृदुत्वं तु विपर्ययम् । (39 ab)
स्वस्वरे मध्यमत्वं च श्रुतीनामेष निर्णयः ॥ (39 cd)
दीप्त्यायतं करुणानां मृदुमध्यगोम्तथा । (40 ab)

which appears to be an interpolation from an extraneous source.

# APPENDIX IV

## INDEX TO RAGAS

[*Note*: The number with an asterisk below indicates the page on which the respective rāga is described.]

| | *Name* | *Pages* |
|---|---|---|
| 18 | Kannaḍa-gaula | 203, 270* |
| | Kannaḍa-gauḍa (-gaulī) | 198, 201, 254*, 277, 278, 279 |
| 19 | Kandarpa | 192 |
| 20 | Kambhāvatī | 247* |
| 21 | Karṇāṭa-baṅgāla | 197, 200, 203, 239,* 274* |
| 22 | Kāmbhojī (-dī) | 193, 200, 203, 273*, 277, 278 |
| 23 | Kāmoda | 192, 258* |
| 24 | Kālindī | 195, 200 |
| 25 | Kiraṇāvalī | 195 |
| 26 | Kuntala-varāḷī (-lī) | 197, 201, 203, 241* |
| 27 | Kumudakrī | 197 |
| 28 | Kurañjī | 203, 277, 278 |
| 29 | Kedāra-gaula | 203, 272* |
| 30 | Kaiśika-kakubha | 192 |
| 31 | Kaiśikī | 194, 200, 260* |
| 32 | Kollahāsa | 192 |
| 33 | Kokilā-pañcama | 192 |
| 34 | Kolāhala (-lā) | 193, 197, 226*, 250* |
| 35 | Kauśalī | 194 |
| 36 | Kauśī | 278 |
| 37 | Khañjanī | 194 |
| 38 | Khasikā | 201 |
| 39 | Gāndhāra-gati | 196, 201 |
| 40 | -pañcama (-mī) | 192, 193, 199, 231* |
| 41 | -vallī | 194 |
| 42 | Gāndhārī | 193, 194, 195 |
| 43 | Gāmbhīrī | 196 |

| | *Name* | *Pages* |
|---|---|---|
| 44 | Gurjarī (*also* Gūrjarī, Ghūrjarī) | 194, 197, 200, 202, 225*, 271*, 277 278 |
| 45 | Guṇḍakrī (–kriyā) | 199, 203, 274*, 277, 278 |
| 46 | Gurañjī (–ikā) | 199, 201 |
| 47 | Gollī | 196, 201 |
| 48 | Gauḍa (*also* Gaula) | 197, 199, 204, 226*, 277, 279, 280 |
| 49 | Gauḍī (–lī) | 194, 200, 203, 264*, 277, 278, 281 |
| 50 | Gauḍa–kṛti | 197, 240* |
| 51 | –kaiśika | 192, 199, 212* |
| 52 | kaiśika–madhyama | 191, 199, 211* |
| 53 | –pañcama | 192, 199, 212* |
| 54 | Ghaṇṭā | 281 |
| 55 | Ghaṇṭārava | 196, 200, 204, 276* |
| 56 | Caturtha–saindhavī | 263* |
| 57 | Cauhā ( ? Cauhārī) | 201 |
| 58 | Chāyā | 196, 201, 279 |
| 59 | –gaula | 203 |
| 60 | –gaulī | 279 |
| 61 | -toṇḍī | 201, 244* |
| 62 | –naṭṭā | 198, 202, 204, 250* |
| 63 | –velāvulī | 198, 201, 248* |
| 64 | –rañjī | 274 |
| 65 | Chevāṭī | 193, 194, 250* |

| | *Name* | *Pages* |
|---|---|---|
| 66 | Ṭakka | 192, 193, 199, 226* |
| 67 | -kaiśika | 193, 199, 267* |
| 68 | -saindhava | 192, 199 |
| 69 | Ḍombakrī (Ḍombakṛti, Dombakṛti) | 193, 197, 200, 232 |
| 70 | Taraṅgiṇī | 196, 201 |
| 71 | Tāna (-nā) | 193 |
| 72 | -valitā | 193 |
| 73 | Tānōdbhavā | 194, 195 |
| 74 | Tumburā | 195 |
| 75 | Turuṣka-gauḍa | 198, 201 |
| 76 | -toṇḍi (-toḍī) | 201, 204, 245* |
| 77 | Tṛtīya-saindhavī | 263* |
| 78 | Toṇḍī (Toḍī) | 197, 199, 204, 221* 278 |
| 79 | Travaṇā | 193, 194, 232* |
| 80 | Travaṇodbhavā | 193 |
| 81 | Trāvaṇī | 194, 200, 265* |
| 82 | Trine (-ṇe) trakrī-(kṛti) | 194, 197, 200, 202, 265*. |
| 83 | Dakṣiṇa (Dākṣiṇātya-gūrjarī) | 198, 201, 246* |
| 84 | Dākṣiṇātyā | 194 |
| 85 | Dīpa (-paka) | 196, 200, 203 |
| 86 | Devakrī (-kriya,-kṛti) | 197, 202, 204, 241*, 277, 278 |
| 87 | Deva-gāndhārī | 203 |
| 88 | Devāra-vardhaṇī | 194, 195 |
| 89 | Devāla | 197, 202 |

| | *Name* | *Pages* |
|---|---|---|
| 113 | Nāda-rāmakriyā | 203, 273* |
| 114 | * Nādyā | 195 |
| 115 | Nādāntarī | 196, 201 |
| 116 | Nāraṇī | 203 |
| 117 | Nārāyaṇī | 204, 273* 277, 278 |
| 118 | Niṣādinī | 194 |
| 119 | Nīlotpalī | 196, 201 |
| 120 | Pañcama | 193 |
| 121 | -lakṣitā | 193 |
| 122 | -ṣāḍava | 193, 194, 225* |
| 123 | Pañcamī | 193 |
| 124 | Pallavī | 195 |
| 125 | Pratāpa-varāṭi | 201, 244* |
| 126 | -velāvulī | 198, 201, 248* |
| 127 | -svara-varāṭī | 198 |
| 128 | Prathama-mañjarī | 197, 200, 235* |
| 129 | -lalitā | 261* |
| 130 | -saindhavī | 262* |
| 131 | Prasava | 192 |
| 132 | Pāḍī | 203, 274*, 278 |
| 133 | Pārvatī | 195 |
| 134 | Piñjarī | 194, 239* |
| 135 | Pulindī (-dikā) | 194, 200 |
| 136 | Pūrṇāṭa (-ṭikā) | 196, 197, 202 |
| 137 | Pūrva-gaula | 203 |
| 138 | Potā | 195 |
| 139 | Paurālī | 194, 195, 200 |
| 140 | Phala-mañjarī | 203 |

| | Name | Pages |
|---|---|---|
| 141 | Baṅgāla | 192, 197, 256*, 277, 280, 281 |
| 142 | Ba(Bā-)ṅgāli | 195, 236* |
| 143 | Baulī | 203, 270*, 277, 278, 279, 280 |
| 144 | Bāhya-ṣāḍavā | 195 |
| 145 | Bṛhad-dākṣiṇātyā | 200 |
| 146 | Boṭṭa | 192, 193, 199, 214* |
| 147 | Bhammāṇa-pañcama | 192, 216* |
| 148 | Bhammāṇī | 194, 200, 266* |
| 149 | Bhallātā | 202, 251* |
| 150 | Bhallātī | 198, 277, 278 |
| 151 | Bhāvakrī | 197 |
| 152 | Bhāvanā-pañcama | 192 |
| 153 | Bhāvanī | 194, 195 |
| 154 | Bhāsa | 192 |
| 155 | Bhāsa-valitā | 195 |
| 156 | Bhinna-kaiśika | 191, 199, 210* |
| 157 | -kaiśika-madhyama | 191, 199, 209* |
| 158 | -tāna | 191, 199, 209* |
| 159 | -pañcama | 191, 193, 199, 223* |
| 160 | -paurālī | 194, 200 |
| 161 | -valitā | 194 |
| 162 | -ṣaḍja | 191, 193, 199, 222*, 276* |
| 163 | -ābhīrī | 200 |
| 164 | Bhuñjī (-jikā) | 198, 207, 247* |
| 165 | Bhūta-mañjarī | 194 |
| 166 | Bhūpati | 277 |

| | *Name* | *Pages* |
|---|---|---|
| 190 | -vesarī | 193, 194 |
| 191 | -śrī | 197, 200, 203, 220*, 271*, 281 |
| 192 | Mālavā | 195, 267* |
| 193 | Mālavī | 193, 278, 280 |
| 194 | Māhurī | 277, 278, 279 |
| 195 | Megha | 192, 257* |
| 196 | Megha-rañjī | 277, 278, 280 |
| 197 | Meca-baulī | 203 |
| 198 | Rakta-haṁsa(-sī) | 192, 278 |
| 199 | Ragantī | 193, 200, 233* |
| 200 | Ravi-candrikā | 193 |
| 201 | Rāga (Nāga-?)-gāndhāra | 199 |
| 202 | Rāga (Nāga-?)-dhvani | 200 |
| 203 | Rāga-pañjara | 277, 280 |
| 204 | -rañjī | 278 |
| 205 | Rāma-krivā(-krti) | 197, 198, 202, 240*, 278, 279 |
| 206 | Rīti | 196 |
| 207 | -gaula | 203, 273* |
| 208 | Rūpa-sādhāra(-rita) | 192, 199 |
| 209 | Reva-gupta(-ti) | 192, 195, 203, 230*, 275*, 280 |
| 210 | Laghu-dākṣiṇātyā | 200, 252* |
| 211 | Lalitā | 193, 195, 200, 202, 277*, 278, 281 |
| 212 | Lāṭī | 196 |
| 213 | Varāṭī(-li) | 194, 197, 200, 204, 224*, 268*, 278, 279 |